S.2

# मागधम्

षाण्मासिक संस्कृत-शोधवाङ्मयस्य
प्रथमोदयः

## कालिदासानुशीलनम्

●

संस्कृत-प्राकृत-विभागः,
एच्. डी. जैनकालेजः, आरा,
( मगधविश्वविद्यालयः )

●

# मागधम्

[ मगधविश्वविद्यालयस्याङ्गभूतहरप्रसाददास जैनकालेज-
संस्कृत-प्राकृत-विभागस्य षाण्मासिकसंस्कृत-
शोधवाङ्मयस्य प्रथमोदयः ]

## कालिदासानुशीलनम्

संस्कृत-प्राकृत-विभागः
एच० डी० जैनकालेजः, आरा
( मगधविश्वविद्यालयः )

**कालिदास-जयन्ती**

विक्रमाब्दः २०२३

# मागधम्

संस्कृत-प्राकृतविभागस्य षाण्मासिकसंस्कृत-शोध-
वाङ्मयस्य प्रथमोदयः

## कालिदासानुशीलनम्



संरक्षकः

**राजनीतिज्ञः, शिक्षाशास्त्री, कर्नलजवारहुसैनः**

मगधविश्वविद्यालयस्योपकुलपतिः

प्रेरकः

**डॉ० परमहंसरायः**

एम्० ए०, पी-एच० डी० ( लन्दन )

आरास्थहरप्रसाददासजैनकालेजस्य प्राचार्यः

सम्पादकः

**लब्धस्वर्णपदकः, डॉ० नेमिचन्द्रशास्त्री**

एम्० ए० (संस्कृत-प्राकृत-हिन्दी), पी-एच० डी०, डी० लिट्०,

ज्योतिषाचार्यः, न्याय-काव्य-ज्योतिषतीर्थञ्च

संस्कृत-प्राकृत-विभागाध्यक्षः—आरास्थ एच्० डी० जैनकालेजस्य

संयोजकौ

**श्री रामनाथपाठकः 'प्रणयी'**

एम्० ए० ( संस्कृत-प्राकृत ), साहित्यव्याकरणायुर्वेदाचार्यः

**डॉ० राजारामजैनः**

एम० ए० ( प्राकृत-हिन्दी ), शास्त्राचार्यः

आरास्थहरप्रसाददासजैनकालेजस्य

संस्कृत-प्राकृत-विभागस्य प्राध्यापकौ

# विषयानुक्रमणिका

# पुनर्भूतले भातु कविकालिदासः

प्राध्यापको रामनाथपाठकः 'प्रणयी'



पुनर्भूतले भातु कविकालिदासः !

अजनि मानसाद्यस्य वीरः कुमारः,
कृतो येन गन्धर्व-विरहावतारः,
मधौ पारिजातस्य यः पुष्पवासः !
पुनर्भूतले भातु कविकालिदासः !

प्रियो भूपतिर्यस्य जातो दिलीपः,
वने दीपितो येन रघुवंश-दीपः,
कृतौ शोभते यस्य कैलासहासः !
पुनर्भूतले भातु कविकालिदासः !

क्व तद्देवदारुः, क्व सा कामधेनुः,
क्व सुरबालिका-केलि-सौवर्णरेणुः,
क्व दोग्धुं धरां दक्षमेरोः प्रयासः !
पुनर्भूतले भातु कविकालिदासः !

विधायतु श्रृङ्गारलीलां नवीनाम्,
पुरावादयद्योऽद्भुतां काव्यवीणाम्,
अभिज्ञानशाकुन्तलं यद्विलासः !
पुनर्भूतले भातु कविकालिदासः !

तपःसाधने यस्य चेतः प्रतीतम्,
सदा त्यागवृत्तौ श्रुतं यस्य गीतम्,
श्रितो यस्य वाणीं तपोवन-विकाशः!
पुनर्भूतले भातु कविकालिदासः!

अमर-भारती-संस्कृतेर्गायको यः,
गुरूणां गुरुः, राष्ट्रसन्नायको यः,
चिरं राजते यस्य लालित्यरासः!
पुनर्भूतले भातु कविकालिदासः!

क्व धारापुरी, क्वाद्य विक्रमनरेशः,
क्व साहित्य-संगीत-विद्या-दिनेशः,
कलाकुङ्कुमानां क्व जीवन-पलाशः!
पुनर्भूतले भातु कविकालिदासः!

यशः श्रूयते दिक्षु यस्योपमायाः,
क्व सौभाग्यसिन्धुः स विद्योत्तमायाः,
अपूर्वः प्रसादेन यत्सूक्तिभासः!
पुनर्भूतले भातु कविकालिदासः!

प्राध्यापक, संस्कृत-प्राकृत-विभाग,
एच० डी० जैन-कालेज, आरा
( मगधविश्वविद्यालय )

# जयदु कइगुरुकालिदासो

प्राध्यापको रामनाथपाठकः 'प्रणयी'



जयदु कइगुरुकालिदासो !
अमिय-सित्ता जस्स वाणी,
जस्स देविट्ठा भवाणी,
जस्स कव्वरसेण जाओ कत्तिकेयतणो विगासो !
जयदु कइगुरुकालिदासो !

जेण दोत्ते वारिवाहो,
कप्पिदो सरसप्पवाहो,
अंसुहिं जक्खांगनाए जस्स संजादो विलासो !
जयदु कइगुरुकालिदासो !

समरईव सुदक्खिणाए,
विहिद-धेणु–पदक्खिणाए,
जस्स रहुवंशे रहूणं वंस-कित्तिदकित्ति-भासो !
जयदु कइगुरुकालिदासो !

जस्स मालविकग्गिमित्तं,
रसिभद्दा-सोहिद- चरित्तं,
हरदि कस्स मणो ण जस्सिं नायिकाए महुररासो !
जयदु कइगुरुकालिदासो !

पारिजाद - कुसुम - परागं,
विक्कमस्स च पणयरागं,
रसिग-लोग-हिदाय णट्टे रचिदवन्तो नवविचासो !
जयदु कइगुरुकालिदासो !

तस्स पादम्मि नु पणामा,
अत्थि अप्पिदपुण्णकामा,
विरचयदु कलुणं सदेहं जस्स साउंदलणिरासो !
जयदु कइगुरुकालिदासो !

प्राध्यापक, संस्कृत-प्राकृत-विभाग
एच० डी० जैन कालेज, आरा,
( मगधविश्वविद्यालय )

# कालिदासस्यार्थिक-विचारः

डा० श्रीपरमहंसरायः, एम्० ए०, पी० एच्० डी० ( लन्दन )

●

कविः स्वसमयस्य प्रतिनिधिर्भवति। स जीवनस्य व्याख्यां तथा करोति यथा तत्कालीनसामाजिकार्थिकराजनैतिकपरिस्थितीनां बोधः सम्यक् प्रकारेण जायते। कविकुलगुरुः कालिदासः युगप्रवर्त्तकः कविरस्ति। स स्वरचनासु राष्ट्रस्य समस्ताङ्गानामभिव्यञ्जनां सुन्दररूपेण कृतवान्। कामसूत्रे वात्स्यायनेन अर्थस्य या परिभाषा व्यलेखि, तस्याः व्यावहारिकः प्रयोगः कालिदासस्य ग्रन्थेषु लभ्यते। वात्स्यायनो लिखितवान्—

'विद्याभूमिहिरण्यपशुधान्यभाण्डोपस्करमित्रादीनामर्जनमर्जितस्य विवर्धनमर्थः'—१।२।९।

वस्तुतोऽर्थेन शरीरस्य सम्बन्धोऽस्ति। जीवनस्य समस्तकामनाः अर्थद्वारेण सम्पद्यन्ते। भोजनवस्त्रादिभि र्विनापि शरीरस्थितिः न सम्भाव्यते। अतो जीवनस्यानिवार्यावश्यकतासु स्थानमर्थस्यास्ति। महाकविकालिदासेनापि जीवनस्य महत्वपूर्णाङ्गरूपेणार्थः स्वीकृतः। कविना आर्थिकायसाधनेषु कृषिव्यवसायारण्यखन्यादीनां गणना कृता। तद्दृष्टौ जीवननिर्वाहस्य प्रमुखसाधनं कृषिरस्ति। अथेयं कृषिर्वर्षाधीनास्ति। अतएव 'मेघदूतस्य निम्नश्लोके कृषकललनाभिः कृतं सादरं मेघदर्शनमुपन्यस्तम्—

> त्वय्यायत्तं कृषिफलमिति भ्रूविलासानभिज्ञैः,
> प्रीतस्निग्धैः जनपदवधूलोचनैः पीयमानः।
>
> —पूर्वमेघः १६।

गोचरभूमिः पशुभ्यः ग्रासं ददाति, येन पशुसम्पद् समृद्धा भवति। व्यक्तिसमाजोभयकृते पशुधनस्योपयोगः सर्वाधिकोऽस्ति। एतदेव कारणमस्ति यत् महाकविकालिदासेनैकस्याः गोः रक्षायै चक्रवर्तिना सम्राजा दिलीपेन प्राणविसर्जनस्य संकल्पः कारितः। भारतसदृशविशालराष्ट्राय पशुसम्पदः समृद्धिसंरक्षणे परमावश्यके। दिलीपः सिंहं प्रतिगोसंरक्षणाय यं तर्कमुपस्थापयति, तस्यायमाशयो यत्

गौः न केवलं पयो ददाति, प्रत्युत विभिन्नप्रकारैः सा राष्ट्रस्य सर्वाङ्गीणसमृद्धौ पूर्णसहयोगं ददाति। वस्तुतः सा राष्ट्रायान्वर्थकामधेनुरस्ति। अतएव सा कविना कामदुघेत्यभिहिता[१]। महाकविना केवला गौरेव नो पशुधनेषु स्वीकृता, प्रत्युत तेषु वृषभा[२]श्वगर्दभोष्ट्र[३]गजादीनामपि वर्णनं कृतम्। मालविकाग्निमित्रे त्वेकः पालितमर्कटोऽपि निर्दिष्टोऽस्ति, यो नाम्ना पिंगलः कथ्यते स्म। एतेन तद्युगे वान[४]राणामप्युपयोगितार्थिकदृष्ट्या लक्ष्यते।

कविना पशुसम्पद् वर्गद्वये विभक्ता। वन्य[५]पशुर्ग्रामपशुश्च। वन्यपशुषु सिंह[६]-सूकर[७]-महिष-मृगा[८]दीनां निर्देशोऽस्ति। मृगाणामपि कियन्तो भेदाः वर्णिताः सन्ति, येषु मृगनाभिकृष्ण[९]सारौ[१०] प्रधानौ स्तः।

---

१. 'न केवलानां पयसां प्रसूतिमवेहि मां कामदुघां प्रसन्नाम्'।

—कालिदासग्रन्थावली, प्रथमसंस्करण, रघुवंश २।६३।

२. 'मदोदग्राः ककुद्मन्तः........................।'

—रघुवंश ४।२२।

३. 'अथोष्ट्रवामीशत................।'

—रघुवंश ५।३२।

४. 'जयसेना—देव, कुमारी वसुलच्छी कन्दुअंअणु धावन्दी पिंगलवाणरेण बलीअं वित्तासिदा अंकणिसण्णा देवीए पवादकिसलअं विअं वेवमाणा ण किंपि पकिर्दि पडिवज्जइ।'

—मालविका० चौखम्बा, विक्रम संवत् २००८, अंक ४, पृ० १९०।

५. 'वन्यान्विनेष्यन्निव दुष्टसत्त्वान्।'

—रघुवंश २।८।

६. 'केसरिणं ददर्श............'

—रघुवंश २।२९।

७. 'सपल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि।
ययौ मृगाध्यासित-शाद्वलानि श्यामायमानानि वनानि पश्यन्॥'

—रघुवंश २।१७।

८. 'गाहन्तां महिषा............।'

—अभिज्ञानशाकुन्तल २।६।

९. 'प्रकामविस्तारफलं हरिण्यः।'

—रघुवंश २।११।

१०. 'कृष्णसारे ददच्चक्षुः.................।'

—अभि० १।६।

महाकविकालिदासः पर्वतीयगोचरभूमिषु चरन्तीभ्यः मेषिकाभ्यः प्राप्यामूर्णां व्यक्तिसमाजकृत आवश्यकीममन्यत। पशुभ्यः जीवनस्याहाराभरणादीनि सर्वाण्यावश्यकवस्तून्युपलभ्यन्ते स्म। अतएव कविना पशुसंपत्संरक्षणाय विशेषं बलं प्रदत्तम्।

कविदृष्टौ द्वितीयमार्थिकमहत्त्वं वृक्षसंरक्षणस्य वर्त्तते। स एतद्राष्ट्रस्य हिमालयधेनुदेवदारुषु त्रिषुप्रधानप्रतीकेषु देवदारुवृक्षः देशस्य सर्वाधिकमहत्सम्पद् रूपेणाधिकृतः। एतत्सत्यमस्ति यत् प्रतिवर्षं लक्षाधिकमुद्राणामायो देवदारुवृक्षेभ्यो जायते। कविः सिंहमुखेन दिलीपसमक्षं कथितवान् यत् अयं विशालः सम्मुखे दृश्यमानो देवदारुवृक्षः शङ्करेण पुत्रीकृतोऽस्ति। पार्वत्येनं पुत्रसदृशं मनुते। एकदैकेन वन्यद्विपेन स्वगण्डस्थलघर्षणेन त्वगस्योन्मथिता, येन पार्वती दैत्यबाणाहताय कार्तिकेयाय विहिताच्छोकादप्यधिकं शोकं कृतवती। ताप्रभृत्येव शङ्करेण वनगजान् हिंस्रप्राणिनश्च मारयितुमत्राहं रक्षको नियुक्तः। मम भोजनञ्चात्रागतपशुभिरेव संपद्यते—

अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन।
यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः॥

—रघुवंश २।३६।

एतदेवायाति यत् कविदृष्टौ वृक्षाणां वनानाञ्चातिमहत्त्वमस्ति। अधुनापि वैज्ञानिकयुगे दृश्यते यत् वर्षाकारणं वृक्षराजिर्वर्तते। अनेनैव हेतुनाऽस्माकं भारतीयशासनेनापि वृक्षरक्षणार्थं वृक्षरोपणप्रचारो विधीयते। पुरातनकाले कालिदाससमक्षमपि समस्येयमासीन्। अनेनैव कारणेन वृक्षसंरक्षणस्यावश्यकता तेन प्रदर्शिता। ऋषीणामाश्रमेषु वृक्षास्तेषां समस्तावश्यकतानां पूर्तिमकुर्वन्। तैः नागरिकजीवनमपि प्रभावितमासीत्। कालिदासोऽभिज्ञानशाकुन्तलस्य चतुर्थाङ्के शकुन्तलागमनवेलायां कण्वमुखेन वृक्षात् शकुन्तलागमनानुमतिं याचितवान्, यतः शकुन्तला तत्रत्यवृक्षाणां सम्यक् प्रकारेण संवर्द्धनं करोति स्म। एतद्वृक्षाणां जीवनधारणायात्यन्तमहत्त्वमासीत्। शकुन्तला येन प्रकारेण वृक्षाणां सेचनं करोति स्म, संभवतः तेनैव प्रकारेण भारते वृक्षसेचनमभवत्।

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतासु या,
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।
आद्ये वः कुसुमप्रसूतिसमये यस्याः भवत्युत्सवः,
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्॥

—अभिज्ञान० ४।९।

कालिदासदृष्टौ वनस्पतिजगतोऽत्यधिकमार्थिकमहत्त्वमस्ति। तस्य मान्यता वर्त्तते यद् वृक्षेभ्यो वस्त्रावासभूषणानां त्रयाणामपि प्राप्तिः संभाव्यते। शकुन्तला-गमनावसरे कण्वशिष्यो वृक्षेभ्य एवोत्तमवस्त्राभूषणानि प्राप्नोति—

> क्षौमं केनचिदिन्दु-पाण्डुतरुणा माङ्गल्यमाविष्कृतम्,
> निष्ठ्यूतश्चरणोपरागसुभगो लाक्षारसः केनचित्।
> अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
> र्दत्तान्याभरणानि नः किसलयोद्भेदप्रतिद्वन्द्विभिः॥
>
> —अभि० ४।५।

शकुन्तलार्थं कण्वशिष्याय केनचिद् वृक्षेण शशितुल्यं श्वेतमंगलमयं कौशेयवस्त्रं प्रदत्तम्। केनचित् तस्यै चरणरागोपयोगी सुन्दरलाक्षारसः पुरस्कृतः। सुन्दर-किसलयप्रतिस्पर्धिभिः आपर्वोत्थितैः वनदेवताकरतलैः केनचित्तरुणाऽभूषणानि समर्पितानि।

कालिदासेन पशुसम्पत्तेर्वृक्षसम्पत्तेश्चातिरिक्ता कृषिरप्यार्थिकायसाधनेषु सर्वप्रमुखसाधनरूपेण गृहीता। तेन विविधप्रकाराणामन्न[1]सम्पदां निर्देशः कृतः। तदानीं यव[2]धा[3]न्येक्षु[4]तिलादीनामपि कृषिरभवत्।

स्पष्टमेतद्यत् नदीनां समीपे कृषिः विशेषरूपेणाभवत्। नदीसलिलसंयोगेन मृत्तिकायां विशेषरूपेणोर्वरता जायते स्म। अतएव पञ्चनदोत्तरप्रदेशोच्चभूमौ यवगोधूमयोरुत्पत्तिरभवत्। विहारस्य वंगप्रदेशस्य च समतलभूमौ धान्यकृषिः सम्पन्नाऽसीत्। कालिदासेन धान्य[5]स्य शालिकल[6]मनीवा[7]रादिकतिपयभेदाः निर्दिष्टाः। इक्षोः गु[8]डशर्करासिताखण्डादिपदार्थाः निर्मीयन्ते स्म। कविना मेघदूते माल[9]वप्रदेशे

---

१. 'सस्यानामिव सम्पदः।'—रघुवंश १०,५६ तथा 'क्षेत्रैः सस्यम्।'
—रघुवंश १७।६६।

२. यवाङ्कुरा।—रघुवंश १२।४६।

३. शालिगोप्यः।—रघुवंश ४।२९ तथा 'कलमा इव।'—रघुवंश ४।३७।

४. इक्षुच्छाया।—रघुवंश ४।२० तथा ऋतुसंहार ५।१।

५. रघुवंश ४।२०।

६. रघुवंश ४।३७।

७. 'नीवाराः शुकगर्भ............' अभि० १।१४।

८. 'प्रचुरगुडविकारः स्वादुशालीक्षुरम्यः।'—ऋतुसंहार ५।१६।

९. 'सद्यः सीरोत्कषणसुरभिक्षेत्रमारुह्यमालम्।'—पूर्वमेघ १६।

तत्कालकृष्टक्षेत्रेभ्यो निर्गच्छतो मधुरगंधस्य कृतं वर्णनं न केवलं काव्यात्मकमेवापितु तदार्थिकदृष्ट्या ततोऽपि विशिष्टाय कृषिमहत्त्वाय प्रभवति ।

कालिदासवर्णनैः एवं प्रतीयते यत् वंगब्रह्मदेशयोस्तथान्यत्रापि क्वचित् कार्त्तिकादारभ्य पौषमासं यावत् सस्यानामाग्रहायणी कृषिः समाप्ताभवत् । ऋतु-संहारे ऋतूनां—यद्वर्णनं कविना कृतम्, तेन ज्ञायते यत् वंगप्रदेशे इतः पूर्वमपि आषाढादारम्भ भाद्रपदमासं यावत् समाप्यो धान्यविशेषोऽजायत । कविः शरद्वर्णने पुष्पितानां कासानां पक्वानां शालीनाञ्च चित्रणं कुर्वन् कथयति—

काशांशुका विकचपद्ममनोज्ञवक्त्रा सोन्मादहंसरवनूपुरनादरम्या ।
आपक्वशालिरुचिरानतगात्रयष्टिः प्राप्ता शरन्नववधूरिव रूपरम्या ॥

—ऋतु० ३।१

आकम्पयन् फलभरानतशालिजालान्यानर्त्तयन् तरुवरान् कुसुमावनम्रान्,
उत्फुल्लपंकजवनां नलिनीं विधुन्वन् यूनां मनश्चलयति प्रसभं नभस्वान् ।

ऋतु० ३।१० ।

एवंप्रकारेण महाकविकालिदासेन कृष्याआर्थिकमहत्त्वं प्रदत्तम् । एतस्मिन्नेव संदर्भे सः कृषि-सहायकानां निर्देशं न विस्मृतवान् । अनड्वाहः[1] क्षेत्रोत्कर्षण उपयुज्यन्ते स्म । तेषामुपयोगिता भारवहनायाप्यासीत् । भारवहनकर्तृषु पशुपुवृष-भोष्ट्र[2]वामीनां[3]मन्येषाञ्च संकेतः कृतो वर्त्तते । पर्वतानां गोचरभूमिषु चरणशीलानां मेषा[4]णामपि व्यक्ति-समाजसम्पत्सु गणनाऽसीत् । कृषेरन्योपकरणहलं[5]स्यापि निर्देशः कविरचनासु लभ्यते । ग्रासक्षेत्रेषु पशवः चरन्ति स्म । अतएवोर्वरभूम्या सहैव तेषां क्षेत्राणामप्यार्थिकमूल्यमासीत् । देशस्याधिकांशजनानां व्यवसायः कृषिरासीत् । गुप्तकालस्यार्थिकेतिहासावलोकनेनापि कृषौ तद्व्यवस्थायाञ्च प्रकाश आपतति । कृषकाः शासकाय धरा-षष्ठां[6]शं करं ददति स्म । यदि ते कस्मादपि कारणवशात् निरन्तरं वर्षत्रयं यावत् भूमिकरदानेऽसमर्था अभूवन् तदा ते भूम्यधिकारवञ्चिताः

१. रघुवंश ४।२२ ।
२. तदेव ५।३२ ।
३. तदेव ।
४. रघुवंश ४।२२ ।
५. रघुवंश १६।२ ।
६. पूर्वमेघ १६ ।
७. 'षडंशभाक्' रघु० १७।६५ ।

जायन्ते स्म। राजसभायां अधिकार आसीत् यत्सा तादृग्भूमिविक्रयं[1] कुर्यात्। एतादृशी भूमिः वन्ध्या भूमिः कथिता वर्त्तते। एतादृशीं भूमिं धार्मिकजनाः क्रीत्वा मन्दिराय धर्मशालायै वा तां यच्छन्ति स्म। एतत्तथ्यस्य समर्थनं गुप्तकालीन-ताम्रपत्रेणापि[2] भवति। एतेषु ताम्रपत्रेषु वन्ध्यभूमिविक्रयस्य चर्चा विद्यते। विक्रये समस्तभूमिरेकत्र न दीयते स्म, परन्तु विभिन्नस्थानस्थितलघु-भूभागेभ्यो दानमभवत्[3]। स्पष्टमेतद्यत् वन्ध्यभूमिभागे राज्ञः स्वामित्वमासीत्। बंगप्रदेशात् गुप्तानां यानि ताम्रपत्राणि प्राप्तानि, तेष्वपि भूमिसम्पादनस्य संकेतोऽस्ति[4]। भूमिक्रेतृभ्यो विषयपतेः महत्तरस्य वा कार्यालये आवेदनपत्रदानमावश्यकमासीत्, यस्य सीम्नि सा भूमिः स्थिताऽभवत्, तस्य स्थानस्य प्रतिपुस्तपालः तन्निवेदनपत्रं शासनसमक्षं प्रेषयति स्म। राजाज्ञानुसारं तद्भूमिनिरीक्षणाधिकारः महत्तराय समर्पितोऽभवत्। नगरसीम्नि स्थितायां तस्यां भूमौ नगराधिकारिणा तस्याः सम्पादनमभवत्[5]। ग्रामान्तर्गतायाञ्च तस्यां तस्याः सम्पादकः महत्तरोऽभवत्। एवं भूमिव्यवस्थासंकेतः गुप्तकालपरिप्रेक्ष्ये कालिदासग्रन्थैः लभ्यते।

कालिदासस्याभिज्ञानशाकुन्तलेन सेचनव्यवस्थायामपि प्रकाश आपतति। अभिज्ञानशाकुन्तले कूपकुल्या[6]तडागादीनामपि कृषिसेचनप्रसङ्गे चर्चायाति। कृषिभूमिसेचनातिरिक्तं महाकविकालिदासेन वाणिज्यव्यवसायकर्मणोरपि विश्लेषणमार्थिकदृष्ट्या कृतम्। कविना धातु[7]-मत्स्यधीवर[8]-बन्धन[9]-व्याध[10]-सैनिक[11]-तन्तु[12]वाय-पौरोहित्य[13] कर्मणां तथा वनेच[14]र-स्वर्णकारव्यवसाययोरपि निर्देशो विहितः।

---

१. मजूमदार: Corporate life in Ancient India. P. 161.

२. दामोदरपुरताम्रपत्रम्—Epigraphic India vol.15,P. 130.

३. दामोदरपुरताम्रपत्रम्-संख्या ५।

४. दामोदरपुरताम्रपत्रम्—Epigraphic Indica. vol.15,P.130.

५. गुप्तसाम्राज्यका इतिहास, द्वितीय खण्ड (इलाहाबाद १९३९) पृ० २३–२४।

६. शाकुन्तलम् १।१५।

७. 'शिल्पमाधातुः'—मालविकाग्निमित्रम् १।६।

८. 'शुणध दाणि। हगे शककावदालब्भंतरालवाशी धोवलो।'

—शाकु० षष्ठांक, प्रारंभिकगद्यम्।

९. 'अहके जालुग्गालादिहिं मच्छबंधनोपाएहिं कुडुम्बलमणं कलेमि।'

—शाकु० षष्ठांक, प्रारंभिकगद्यम्।

१० : मागधम्

भारतस्य व्यापारोऽन्यदेशैः सहाप्यासीत् । जावा-श्याम-कम्बोडियादेशैः सहापि व्यापारसम्बन्ध आसीत् । महाकविकालिदासेन रघुवंशमहाकाव्यस्य निम्नांकितश्लोके पूर्वीयदेशानां व्यापारो निर्दिष्टः ।

अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु ।
द्वीपान्तरानीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः ॥

—रघुवंश ६।५७ ।

उल्लिखितपद्येनैवंप्रतीतिर्भवति यत् भारतस्य व्यापारिकसम्बन्धो पूर्वदक्षिण-देशेभ्यः सहाभवत् । पूर्वीयसमुद्रे भारतीयवणिग्भिः स्वात्यधिकप्रभावः स्थापितः । ते जलमार्गेण प्रायोद्वीपे, द्वीपसमूहे, चीनदेशे च गच्छन्ति स्म । कालिदासेन चीनदेशीयकौशेयवस्त्रस्य प्रचारोल्लेखः कृतः । एवं पूर्वदेशेषु सद्वीपसमूहचीनदेशेन सह भारतस्य व्यापारिकसम्बन्ध आसीत् ।

कालिदासस्य ग्रन्थैः जलमार्गीयव्यापारोऽपि प्रमाणीक्रियते । गुप्तकालीनः चीनीयात्री फाहियानः स्वान्तिमयात्रायां ताम्रलिप्ति सिंहलं सुमात्रां तथा चीनमपि जलपोतेन गतवान् । तेन वर्णितम्—'पुनरहं वणिजां वृहत्पोतमेकमारूढवान् । समुद्रे दक्षिणपश्चिमदिशोः यात्रां कृतवान् । तस्मिन् पोते शतद्वयाधिका जनसंख्यासीत् । पृष्ठभागे जलपोतस्यैका लघुनौका समुद्रयात्रायाः क्षतिरक्षार्थं बद्धासीत्[2] ।

---

१०. 'तदो महन्ते एव्व पच्चूसे दासीए पुत्तेहिं सउणिलुद्धएहिं वणग्गहण कोला-हलेण पडिबोधिदो म्हि—'

—शाकु० प्रारंभिकगद्य विदूषकोक्तिः ) ।

११. 'कृतास्त्रः सांपरायिकः.......... ।'—रघुवंशकाव्यम् १७।६२ ।

१२. अथास्य रत्नग्रथितोत्तरीयमेकान्तपाण्डुस्तनलम्बिहारम् ।
निःश्वासहार्यांशुकमाजगाम धर्मः प्रियावेषमिवोपदेष्टुम् ।

—रघुवंश १६।४३ ।

१३. 'शहजे किल जे विणिन्दिए णहुदे कम्मविवज्जणीऊए ।'
पशुमालणकम्मदालुणे ऊणकम्पमिदु एव्व शोत्तिए ॥

—शाकुन्तलम् ६।१ ।

१४. 'आउल्लप देशे वणचरवुत्तिणा तए होदव्वं ।'

—अभि० द्वितीय अ० प्रार० विदू० ।

१. 'चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ।'—अभि० १।३२ तथा 'संतानकाकीर्णमहापथं तच्चीनांशुकैः कल्पितकेतुमालम् ।'

—कुमार० ७।३ ।

२. फाहियानका यात्रा-विवरण । —पृ० ८० तथा ९१ ।

नात्र संदेहो यत्कालिदाससमये पोतनिर्माणकला पूर्णविकसिताऽसीत् । पोतसञ्चालनेऽपि भारतीयजनाः निपुणा आसन् । महाकविकालिदासेनैकः वंगनिवासी धनमित्रनामा नाविकः पोतकलानिपुणो वर्णितः । कविना व्यलेखि—

वंगानुत्खाय तरसा नेता नौसाधनोद्यतान्,
निचखान जयस्तम्भान्गङ्गास्रोतोऽन्तरेषु सः ।

—रघु० ४।३६ ।

कालिदासस्यान्यैरप्युल्लेखैः जलीयव्यापारे पोतकलाविकासे च प्रकाश आपतति । रघुवंशमहाकाव्यस्य सप्तदशे सर्गे, एकाशीतितमे श्लोके 'शिवजलपथः कर्मणे नौचराणाम्' द्वारेण पोतसञ्चालन-कला-नैपुण्यस्य स्पष्टोल्लेखः कृतो लभ्यते । अभिज्ञानशाकुन्तले समुद्रव्यापारं कुर्वतो धनमित्रसार्थवाहस्य पोतभंगोल्लेखः[1] पोतकलापरिचयं व्यनक्ति । डा० कुमारस्वामिमते गुप्तानां साम्राज्यकालो भारतीयनिर्माणकलायाः महत्तमः युग आसीत् । तदानीं भारतवर्षात्पूर्वस्यां दिशि जावा-चोन-बोर्निया-सुमात्रा-कम्बोडियादेशैः सह तथा पश्चिमदिशि फारसारबाभ्यां साकं व्यापारिकौपनिवेशिक-सम्बन्धावास्ताम्[2] ।

रघुवंशमहाकाव्यस्य त्रयोदशसर्गीयप्रथमसप्तदशश्लोकेषु सामुद्रिकयात्रायाः वर्णनं निःसंदिग्धम् । षष्ठसर्गस्य सप्तमे श्लोके प्रयुक्ताद्वीपान्तरवाक्यांशः द्वीपान्तरसूचनां ददाति । तेन हि जावा-सुमात्रयोरेव ग्रहणं भवति । एतत्कथनस्य पुष्टिः जावायाः 'बोरोवुदुर' मन्दिरस्थैः चित्रैरपि जायते । अत्र विशालजलपोतानां यात्रासम्बन्धि-चित्रमप्यङ्कितमस्ति । कालिदासेन रघुवंशस्य षोडशे सर्गे नौविमान[3]-शब्दस्य प्रयोगः कृतः । एतेन चन्द्र-वितानाकाराः बृहत्तमाभिः नौकाभिः सह चलन्त्यः ताः नौकाः प्रतीयन्ते याभिः पोतभङ्गकाले नौकानां वस्तुजातानां च रक्षाभवत् । एवंप्रकारेण कालिदासोल्लेखैः पोतेन क्रियमाणाः व्यापाराः समर्थ्यन्ते ।

मालविकाग्निमित्रस्य[4] विवरणैः ज्ञायते यद्देशस्यान्तर्व्यापारः नितान्तसमृद्ध आसीत् । मार्गे वञ्चकानां भीतिरासीत् । कदाचित् वणिग्जनाः प्रतार्यन्ते स्म,

---

१. अभि० शा०—षष्ठांके द्वाविंशतितमश्लोकानन्तरम् ।

२. Arts & Crobts in India, p. 166.

३. रघुवंश १६।६८ ।

४. मालविकाग्निमित्रम्—पञ्चमाङ्कः ।

किन्तु स्थलमार्गेण क्रियमाणवाणिज्यस्थितिः सुदृढाभवत्। शताधिकाः सार्थवाहाः सहैव व्यापारार्थं प्रयान्ति स्म। विविधसामग्रीणां क्रय-विक्रययोः संलग्ना अभवन्।

कालिदासीयकाव्यैः वाणिज्य-व्यापार-सम्बन्ध्यनेकवार्त्तानां ज्ञानं भवति। कलिंग[1]-अंग[2]-कामरूप[3] — प्रदेशेभ्यो हीरक-मुक्ता-शंख-सूक्ति-प्रवालैर्निर्मितवस्तूनि प्रदेशान्तरेषु प्राप्यन्ते स्म। नगरे हाटकानि क्रेतृभिः पूर्णान्यभवन्। क्रयार्थे कविना निष्क्रय[4]शब्दः प्रयुक्तः। राजपथस्यो[5]भयोर्भागयोरापणा आसन्, येषु क्रेतॄणां संमर्दः स्थितोऽभवत्। हाटकमार्गं कविना पर्णमार्गं[6] कथितम्। खाद्यपदार्थेषु गुडसिता-निर्मितपदार्थाः हाटकेषूपलभ्यन्ते स्म। कालिदासेन निम्नलिखितश्लोके व्यापारिणां दलानां तत्कार्याणाञ्च प्रशंसात्मकशब्देषु वर्णनं कृतम्—

वापीष्विव स्रवन्तीषु वनेषूपवनेष्विव।
सार्थाः स्वैरं स्वकीयेषु चेरुर्वेश्मस्विवाद्रिषु॥

—रघुवंश १७।६४।

वणिग्दलः पर्वतमार्गैः निर्बाधं गच्छति स्म। नद्यः तस्मै गृहवापी-सदृशाः सहजलंघ्याः आसन्। अरण्यानी तस्मै गृहोद्यानसदृश्यासीत्। स्पष्टमेतद्यत् कालिदासो वाणिज्यमर्थदृष्ट्या विशेषमहत्त्वं दत्तवान्।

वाणिज्यसमृद्ध्यै मुद्राविनिमय आवश्यक आसीत्। कालिदासेन मुद्राणां निर्देशः कृतः। 'अर्थजातस्य[8] गणना' पदद्वारेणार्थसमृद्धौ मुद्राणां महत्त्वं प्रदर्शितम्। वरतन्तुशिष्यः कौत्सः गुरुदक्षिणादानार्थं रघोः स्वर्णमुद्राणां याचनां कृतवान्। चतुर्दशकोटिमुद्राभिः गुरुदक्षिणादानार्थं स रघुसमीपे पदार्पणं कृतवान्। तदानीं स्वर्ण-निष्क-प्रधानाः प्रचलितमुद्राः प्रचलिता आसन्। मालविकाग्निमित्रे 'शतसुवर्ण-परिमाणा[9]'-पदमायातमस्ति, यस्यार्थः शतस्वर्णमुद्रात्मकोऽस्ति। अत्र सुवर्णशब्दः

---

१. रघु० ४।४०, ६, ५४।
२. रघु० ६।२७।
३. रघु० ४।८३।
४. रघु० २।५५।
५. ऋद्धापणं राजपथम्—रघु० १४।३०।
६. कुमारसम्भवम् ७।५५।
७. अभि० शा० कालिदासग्रन्थावली, प्रथमसंस्करणम् पृ० २१९।
८. 'वित्तस्य विद्यापरिसंख्यया मे, कोटीश्चतस्रो दश चाहरेति।'
—रघु० ५।२१।
९. मालविकाग्निमित्रम्।

मुद्रार्थे व्यवहृतो वर्त्तते। वाणिज्यव्यवसायोन्नत्यै मुद्राणां मापतुलानां परमावश्यकता भवति। कालिदासेनानेकस्थलेषु तुलानां[1] तुलामापदण्डानाञ्चोल्लेखः[2] कृतः। एवंप्रकारेण मुद्रारूपेण मूल्यानि दीयन्ते स्म। एवं विक्रय्यतरलपदार्थाः अपि तुलया तोलयित्वा विक्रीता अभूवन्। वस्त्रसदृशाः मापयोग्याः पदार्थाः मापयित्वा विक्रीयन्ते स्म।

आयान्यसाधनेषु खनिजारण्यपदार्था अपि सम्मिलिता आसन्। खनेस्तदुद्गत-वस्तूनाञ्च संदर्भेण ज्ञायते यत् खननक्रिया विस्तृतरूपेणाभवत्। बहुमूल्यखननेन पाषाणादिपदार्थाः निःसृताः अभूवन्। कविना मणीनां नामाङ्कनेषु हीरक[3]-पद्मराग[4]-पुष्पराग[5]-महानील[6]-मरकत[7]-वैडूर्य[8]-स्फटिक[9]-मणि[10]शिला-सूर्यकान्त[11]-चन्द्रकान्तानां[12] खनिजपदार्थानां गणनासु च स्वर्ण[13]-स्वर्णधूलि[14]-रजत[15]-ताम्र-लौह-मनःशिला-गैरिक[16]-सिन्दूर[17]-शैलेय[18]ादीनां संकेतः कृतः।

आर्थिकदृष्ट्या खनिजपदार्थानां यावन्महत्त्वमस्ति, तावदेव समुद्रतलात् प्राप्य-

---

१. रघुवंश ८।१५।

२. कुमारसम्भव १।१।

३. वज्रांशुगर्भाङ्गुलरन्ध्रमेकम्। —रघु० ६।१९।

४. रश्मिर्मणीनामिव गारुडानां सपद्मरागः फलितो विभाति।
—रघु० १३।५३।

५. तस्य प्रभानिर्जितपुष्परागम्। —रघु० १८।३२।

६. मणौ महानील............। —रघु० १८।४२।

७. मरकतमणिभासा वारणाभूषितानाम्। —ऋतु० ३।२१।

८. विदूरभूमिर्नवमेघशब्दान्। —कुमार० १।२४।

९. भक्तिरचितस्फटिकेन रामः। —रघु० १३।६९।

१०. बृहन्मणिशिलाशालम्। —कुमार० ६।३८।

११. भास्करात्सूर्यकान्त इव ताडकान्तकः। —रघु० ११।२१।

१२. व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः। —उत्तरमेघ ७।

१३. ऋतु० ६।१७–१८।

१४. रघु० १४।३३।

१५. रघु० २।८०।

१६. रघु० ५।७२ एवम् ४।७१।

१७. ऋतु० १।२४।

१८. रघु० ६।५१।

पदार्थानामपि। मुक्तातिरिक्त[1]-शंख[2]-शुक्ति[3]-विद्रुमादिपदार्थाः समुद्रतलादुपलभ्यन्ते स्म।

महाकविकालिदासेन समृद्धाटवीभ्यः विशालारण्येभ्यश्च प्राप्यपदार्थानां महत्त्वं प्रदर्शितम्। कलिङ्गस्य कामरूपस्य चारण्यानीभ्यः गजाः गृह्यन्ते स्म[5]। सम्राड्भिः स्वसैन्यशक्तिसंवर्द्धनाय वनेभ्यो गजग्रहणं क्रियते स्म। अतएव महाकविकालिदासेनाखेटप्राणिषु गजानामुल्लेखो नाकारि। स गजाखेटं प्रतिषिद्धममन्यत। दृश्यताम्—

नृपतेः प्रतिषिद्धमेव तत्कृतवान् पङ्क्तिरथो विलङ्घ्य यत्।
अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजो निमीलिताः॥

—रघु० ९।७४।

गजानामाखेटः शास्त्रनिषिद्धोऽस्ति। अतएव दशरथेन यो गजाखेटः कृतः स विद्वत्सम्मतो नास्ति। कदाचित् विज्ञा अपि शास्त्रविरुद्धं कर्मविशवशाः कुर्वते।

अरण्येभ्यो गृहनिर्माणाय वृहत्तरव इन्धनानि च ज्वलनकार्यार्थं प्राप्यन्ते स्म। एतदतिरिक्तस्य नारीणामङ्गरागस्य कृते लाक्षारसस्य, यज्ञादिकार्यस्य कृते कृष्णसारमृगचर्मणः, राज्यत्वचिह्नाय चमरीकेशजालस्य, गृहोपकरणाय सालवृक्षस्यान्यवृक्षेभ्य एलालवंगकृष्णागरुचन्दनादिपदार्थस्य च प्राप्तिरभवत्।

कविकालिदासदृष्टावर्थस्य महत्त्वं वितरणकृत एवासीत्। धनसञ्चयः जनतासु सम्मानसत्कारप्राप्त्यर्थमेव क्रियते। कविः कथयति—

कोशेनाश्रयणीयत्वमिति तस्यार्थसंग्रहः।
अम्बुगर्भो हि जीमूतश्चातकैरभिनन्द्यते॥

रघु०—१७।६०।

अर्थात् धनसञ्चयः सम्मानार्थं क्रियते स्म। अथापि धनसंग्रहेऽर्थिनामाश्रयग्रहणमुद्देश्यभूतमासीत्। धनहीनव्यक्तीनां जीवनं व्यर्थमस्ति। निर्धनसमीपं कोऽपि न गच्छति। चातकोऽपि सजलमेव मेघं याचते। कविनार्थप्राप्तेः समस्तसाधनानि पद्यांश एकस्मिन्नेवानुस्यूतानि।

खनिभिः सुषुवे रत्नं क्षेत्रैः सस्यं वनैर्गजान्।

—रघु० १७।६६।

---

१. रघुवंश १३।१७।
२. रघु० १४।१३, ऋतु० ३।४।
३. रघु० १३।१७, मालविका० १।६।
४. कुमार० १।४४, रघु० ६।१६।
५. रघु० ४।४०।

स्पष्टमेतद्यत् खनिभिः रत्नानि, क्षेत्रेभ्योऽन्नानि, वनेभ्यो गजा एवं भवननिर्माणोपकरणानि लभ्यन्ते स्म ।

कविदृष्टौ यस्य धनस्योपभोगो न क्रियते, तन्मृतं धनमस्ति । यथा जलं भूमौ पतितं तामुर्वरां समृद्धां च करोति तथैव वितरितस्य धनस्योपयोगिता वर्त्तते । कवेः निम्नांकितेन श्लोकेनैतदेवाभिप्रायः व्यज्यते । धनस्य वास्तविकोपयोगः वितरणमेव विद्यते । मेघः समुद्रात्पयोऽवाप्य स्वयं न रक्षति, प्रत्युत वर्षाभिः दत्वा, पुनरपि सागरात् प्राप्नोति । एवमेवार्थो व्यापारे प्रयुज्यते । तदैव स उपयोगी भवति—

सन्तस्तस्याभिगमनादत्यर्थं महतः कृशाः ।
उदधेरिव जीमूताः प्रापुर्दातृत्वमर्थिनः ॥

—रघु० १७।७२ ।

अर्जनेऽपि कविर्धर्मनीत्यै एव वैशिष्ट्यं ददाति । स 'सोऽर्थेन "सदृशस्त्रिषु" रघुवंश १७।५७ । श्लोकं विरचयन्ननीतिविरोधं कृतवान् । नीतिपूर्वकमर्थार्जनं समाजहितेषु तद्वितरणञ्च कालिदासीयार्थनीतेर्लक्ष्यमस्ति ।

प्राचार्य,
एच० डी० जैन कॉलेज, आरा,
( मगधविश्वविद्यालय )
दीपावलिमहोत्सव, वि० सं० २०२३

# कालिदासस्य जीवनदर्शनम्

डॉ० श्री नेमिचन्द्र शास्त्री



कालिदासो भारतीयसाहित्यस्य स्थायी कविरस्ति । तस्य काव्यसौष्ठवं शाश्वतमस्ति । यद्यपि कालिदासेन या समाजव्यवस्था निरूपिता, सा नष्टप्राया विद्यते, तथापि तस्य स्थायि-साहित्यमेतादृशकाव्यमूल्यानि स्थापयति, यानि देशकालयोः सीमानमतिक्रान्तानि सन्ति । महाकविकालिदासेन काव्यनाटकानि प्रणीय जीवनस्य शाश्वतसमस्यानां समाधानं विहितम् । तेन प्रणय-कर्त्तव्ययोः, स्वार्थपरमार्थयोः, धर्मार्थयोश्च संघर्षमपनीय मञ्जुलसमन्वयोपस्थापनं कृतम् । स भारतीयसंस्कृतेरमरगायकोऽस्ति । तस्याः विशुद्धरूपस्य प्रदर्शनं एव तस्य कलायाः पूर्णाभिव्यक्तिरस्ति । भारतीयसंस्कृतिः धर्मादिपुरुषार्थत्रय-समसेवनाग्रहवती वर्त्तते । अतएव कविकालिदासेन मनुष्यचित्तवृत्तीनां नानापरिस्थितिमध्ये चित्रणमकारि । स हि कविरभिज्ञानशाकुन्तले श्रेयसः प्रेयसश्च परस्परसघर्षस्य नितान्तमुदात्तचरित्रं चित्रितवान् । अभिज्ञानशाकुन्तले शकुन्तला शक्तिद्वयेनाकृष्यते । एकशक्त्याः प्रतिनिधि र्दुर्वासाः वर्त्तते । द्वितीयायाश्च प्रतिनिधिर्दुष्यन्तोऽस्ति । दुर्वासा आध्यात्मिकतायाः प्रतीकोऽस्ति । स च बलपूर्वकं स्वास्तित्वं सूचयन् भारतश्रियस्स्वाभिमुखीकरोति । ताश्च स्वरक्षायै उपदिशति । स हि श्रेयसः प्रतीकोऽस्ति । भारतस्य सार्वभौमो राजा दुष्यन्तो भोगविलासस्य भौतिकवादस्य वावतारो विद्यते । सः प्रच्छन्नतस्करसदृशः शान्ताश्रमे प्रविशति तथा स्व-प्रलोभनैस्तमशुद्धमशान्तं च विदधाति । स हि प्रेयसः प्रतीक इति निर्विवादम् । अतः शाकुन्तलनाटके श्रेयःप्रेयसोः संघर्षः प्रदर्शितोऽस्ति । शकुन्तलोपस्थितं श्रेयसं तिरस्कृत्यानुपस्थितं दूरस्थं प्रेयसमङ्गीकरोति तत्परिणामञ्च गृह्णाति दुष्यन्तराजप्रासादाद्बहिष्कारस्वरूपम् । सा पुनः मारीचाश्रमे स्वमातुः मेनकायाः समीपे, ऋषितत्त्वावधाने, घोरं

---

१. न धर्ममर्थकामाभ्यां बबाधे न च तेन तौ, नार्थं कामेन कामं वा सोऽर्थेन सदृशस्त्रिषु । —रघुवंश १७।५७ ।

तपश्चरति । स्वकालुष्यञ्चापनयति । स्वार्थं परमार्थवेद्यामर्पयति । स्वप्रेम श्रेयोऽनु-कूलं विधाय तेन पूर्णसामञ्जस्यं स्थापयति । तदा सा जीवनं धन्यं मनुते वृणोति च शाश्वतं सौख्यं शान्तिञ्च । महाकविकालिदासस्यैतदेव जीवन-दर्शनम् । स जीवने विश्वकल्याणाय महत्त्वं ददाति । वस्तुतोऽनियंत्रितजीवनं भारस्वरूपमस्ति । एतादृशञ्च जीवनं व्यक्ति-समाजोभयकृतेऽहितकरं भवति ।

कालिदासदृष्ट्यां नैराश्यवादो गर्हितोऽस्ति । स वर्त्तमानजीवनं साधनायाः श्रेयसश्च कारणं मनुते । स उक्तवान् यद्देहिने मरणमेव प्रकृतिः । जीवनन्तु विकृतिमात्रमस्ति । यदि प्राणी श्वसन् क्षणमात्रमपि जीवति, तदैतदेव तत्कृते लाभस्वरूपमस्ति—

मरणं प्रकृतिः शरीरिणाम्............ ।

—रघुवंश ८।८७ ।

कालिदासोः वैयक्तिकोन्नत्यपेक्षया सामाजिकोन्नतेः पक्षपात्यस्ति । तस्य समाजः श्रुतिस्मृत्यनुकूलो निर्मितोऽस्ति । सः त्यागाय धर्मसंग्रहं करोति । कालिदासदृष्टौ विजय-लालसा प्राणिनः राष्ट्राणि च पददलितानि कर्त्तुं नास्ति । कालिदासेन चित्रिताः नरपतयः भारतीयसमाजेऽनुकरणीयमादर्शं समुपस्थापयन्ति । सः आदर्शसमाजस्य कल्पनामादर्शव्यक्तित्वाधारे । कृतवान् तथाहि—

'त्यागायासम्भृतार्थानां सत्याय मितभाषिणाम् ।'

—रघुवंश १।७–८ ।

कालिदासस्य जीवनदर्शनं यज्ञाध्ययनदानेष्वाश्रितमस्ति । कविरेतत्त्रयाणां महत्त्वेन सह जीवनशोधनार्थं तपोऽपि परमावश्यकं मनुते । स दानगौरवगाथां गायन् रघुवंशपञ्चमसर्गेऽद्भुतादर्शमुपस्थापितवान् । वरतन्तु-शिष्यः कौत्सः गुरुदक्षिणायै तदा रघुसमीपमागच्छत्, यदा स स्वीयां समस्तां सञ्चितसम्पत्ति यज्ञेऽददात् । रघुरलकापुरीमाक्रम्य यक्षराजकुवेराद्धनं प्राप्तुमुद्योगं कृतवान् ।

एतस्मिन्नेवकाले कोषे स्वर्णवृष्टिरभवत् । एकत्र राज्ञः आग्रह आसीत् सम्पूर्ण-धनग्रहणाय शिष्यंप्रति । अन्यत्र शिष्यस्याग्रह आसीत् यत् स स्वकार्यादधिकमेकं कापर्दकमपि न स्पृशेत् । दातुः ग्रहीतुश्चैष आग्रहः परमाश्चर्यजनकं वस्त्वस्ति । जीवनस्यैतदेव तथ्यं कालिदासस्य जीवनदर्शनमस्ति । आवश्यकतानुसारं ग्रहणन्त-तोऽधिकस्य च परित्यागः समाजकल्याणस्य महनीयसूत्रमस्ति । वस्तुतः कालिदासे-नैतस्मिन् कौत्साख्याने स्वजीवनदर्शनस्य सारो निहितः ।

मनुष्यस्तपसा स्वसमस्तकामनानां पूर्त्तिमेव न करोति प्रत्युत परोपकार-

योग्यतामपि सम्पादयति । कालिदासो जीवनशुद्ध्यै पश्चात्तापं तपस्याञ्चावश्यकीं मनुते । तस्य मदनदहनरहस्यमप्येतन्मूलकमेवास्ति । मदनः पार्वत्याः कमनीय-रूपमाश्रित्य समाधि-निरतशंकरस्यहृदयाघातं समीहते । प्रकृतौ वसन्तागमनं भवति । लतावृक्षोपरि नृत्यन्ती स्वप्रेम प्रकटं करोति । एकस्मिन्नेव कुसुमपात्रे भ्रमरी स्वसहचरेण सह मधु पिबति । व्याधसदृशो मदनः संसारं त्रस्तं कुर्वन्नास्ते । तस्याकाङ्क्षा वर्द्धते । स शङ्करोपर्याक्रमणं करोति । अत्र कालिदासदृष्ट्यां जगत्कल्याणस्यात्यन्तिकमंगलस्य वा प्रतीक एव शंकरोऽस्ति । विश्वकल्याणं मदनो-पासनायां नास्ति, तद्धि तद्मन एवास्ति । कामः स्वप्रभुतां कामयते । स विश्व-कल्याणोपरि स्वमोहनवाणं त्यजति । शंकरश्च स्वतृतीयनेत्रोत्पन्नेनानलेन मदनं भस्मावशेषं करोति । शंकरस्य तृतीयनेत्रं ज्ञानप्रतीकमस्ति । एतच्च प्रत्येक-मनुष्यस्य भ्रूमध्ये विद्यमानमस्ति, परन्तु सुप्ततया तदाभासो न जायते । शंकरस्य तज्ज्ञाननेत्रं प्रवुद्धमस्ति । एतज्ज्ञाननेत्रज्वालायामेव मदनदहनं भवति । कल्याण-विरोधी मदनो भस्मसात् भवति । पार्वती शंकरं विश्वकल्याणं प्राप्तुं तपश्चरति । एतत्सत्यमस्ति यत्तपोविना, विना च हृदयस्थितदुर्वासनाविनाशं कल्याणभावना-प्राप्तिरलभ्यास्ति । महाकविकालिदासेनैतस्यैव जीवनदर्शनस्य सर्वत्राभिव्यञ्जना कृता । जगत्कल्याणं वासनासु नियन्त्रितास्वेव सम्भवमस्ति । तेन पार्वती तपो रहस्यमुद्घाटयता व्यलेखि ।—

इयेष सा कर्त्तुमवन्ध्यरूपताम् ।

—कुमार० ५।२ ।

पार्वतीतपः फलमस्ति—तथाविधं प्रेम—अलौकिकमुत्कटकोटिजं प्रेम तथा तादृशः पतिः—मृत्युञ्जयो महादेवः । पद्येऽस्मिन् रहस्यमेतदस्ति यत् निःस्वार्थ-साधनैव विश्वप्रेमोत्पादयितुं क्षमतामावहति । तपस्यया वासनानिरोधेन च जीवनेऽ-पूर्वशान्तिरुत्पद्यते । मनुष्यः सूर्यकान्तमणिसदृशस्तेजस्वी कोमलश्च जायते । तत्तेजः परेणाभिभूतं न भवति । तिरस्कृतौ च तद्दाहात्मकं भूत्वा तत्स्पर्शानुकूलं विदधाति । अभिज्ञानशाकुन्तले कविरात्मनियंत्रणस्यैतदेव तेजो निम्नप्रकारेण निरूपितवान्—

शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्तितेजः,
स्पर्शानुकूला इव सूर्यकान्तास्तदन्यतेजोऽभिभवाद्वमन्ति ।

—२।७ ।

कतिपये विद्वांसः कालिदासस्य जीवनदर्शनं तपस्त्यागतपोवनरूपं स्वीकुर्वन्ति । बहुष्वंशे तत्कथनं सत्यमप्यस्ति । परन्त्वेतत्तज्जीवनस्य चरमसत्यं नास्ति । यद्यपि

तदीयकाव्येषु तत्कालीनसमाजव्यवस्था पूर्णरूपेण प्रतिविम्बितास्ति, तथाप्यसौ राज्ञे वृत्तद्वयमावश्यकं मनुते—भोगः संग्रामश्च । यद्यपि कालिदासस्य नृपाः प्रजाप्रसन्न-कराः सन्ति तथापीयं पृथ्वी तन्नृपाणां भोगायास्ति, रघुरजायेमां पृथ्वीमिन्दुमतीतुल्यां समर्पितवान् । दुष्यन्तस्यापि प्रतिज्ञायामेष संकल्पः श्रूयते स्म यत्तस्यानेकराज्ञीषु वर्त्तमानासु तदन्तिके द्वयोरेव प्रतिष्ठासीत्—पृथ्व्याः शकुन्तलायाश्च । अत एतद-तिरोहितं यत्कालिदासः सामन्तवादिन्याः व्यवस्थायाः पोषक आसीत् ।

किन्त्वसावेकान्तत एतस्याः व्यवस्थायाश्चारणोनाभवत् । तत्साहित्यं तत्कालीनसमाजव्यवस्थां प्रतिविम्बितामकरोत्, तथापि तस्या एको विशालोंऽशः तद्व्यवस्थामुक्तः सन्कल्पनालोकस्य सृष्टिं कुर्वन्नासीत् । अतएव तत्काव्येषु प्रेमतत्त्वैः सह नवजागरणसंदेशोऽपि निबद्धः प्राप्यते । कालिदासः राजवैभवं वर्णयन् प्रकृति-वर्णनेऽप्यात्मतुष्टिं लभते । दुष्यन्तशकुन्तलयोः प्रेम कस्मिन्नपि नगरे नोत्पद्यते, प्रत्युत तपोवने जायते । शिवपार्वत्योरपि प्रेमप्रसूतिः गन्धमादनपर्वतेऽभवत् ।

अस्तु, अलका विलास-वैभवैर्मण्डिता वर्त्तते । सा च मणिकुट्टिमैः सम्पन्नास्ति । यक्षाणां हर्म्यस्थलानि श्वेतमणिमयानि सन्ति । यक्षवालाः कनकसिकताप्रक्षेपैः मणीन् प्रच्छन्नान् कुर्वते । पुनस्तदन्वेषणक्रीडां कुर्वन्ति । स्वदुकूलेषु स्रस्तेषु यदा ताः रत्नदीपेषु चूर्णं प्रक्षिपन्ति तदा ते न निर्वाणंगच्छन्ति । तासां सुरतजनिताङ्ग-क्लान्तिश्चन्द्रकान्तमणिस्रुतजलविन्दुभिरपनीयते । तासां शृङ्गारप्रसाधनानि कल्प-वृक्षेभ्यो लभ्यन्ते । यक्षस्यगृहवापीषु स्वर्णकमलानि विकसन्ति । तस्योद्याने चेन्द्रनील-मणिमण्डितः क्रीड़ाशैलोऽस्ति । तत्र च कनककदलीवेष्टनं प्रेक्षणीयमस्ति । कालिदासस्यैतादृशं चित्रणं प्रेमपूर्णमस्ति । तस्य प्रेमवृत्तिः नरनारीप्रेमवर्णने, प्रकृतिचित्रणे, सूक्ष्मेन्द्रियवोधे तथा पौराणिकगाथानां सौन्दर्यवादिन्युपयोगे सर्वत्रलक्ष्यते । वस्तुतः प्रेमवाद्यपि कालिदासोजीवने वैयक्तिकप्रेम्ण एव महत्त्वं ददाति । तदीयजीवनदर्शनं प्रेम्णस्तत्पक्षं प्रदर्शयति यस्मिन् प्रेमैकस्मिन् पुरुषे नार्यां चैकस्यामक्षुण्णं तिष्ठति । पुरुषायानेकतरुण्यः स्वयौवनसौन्दर्यैः भोग्याः न भवन्ति । प्रत्युत पुरुषः कस्यामपि नार्यामेकस्यामेव प्रेमाधिकारी वर्त्तते ।

कालिदासस्य कतिपये नायकाः अनेकपत्नीभिरुपास्यन्ते । परन्तु प्रेमिका-रूपेण तेषां स्नेहं काचनैकैव गृह्णाति । दिलीपस्याप्यनेकपत्न्य आसन् । किन्तु स सुदक्षिणाया एव प्रेम्यासीत् । एतदेव तथ्यं दुष्यन्तेऽपि वर्त्तते । तस्यानेकपात्रेषु बहूनामेकपत्नीत्वमेवास्ति । यक्षस्यालकायां विलासस्यानेक साधनान्यासन्, किन्त्वनेक साधनैः सम्पन्नोऽप्यसौ यक्षः स्वप्रियायामेव प्रेम करोति । तस्य प्रियाप्यलकायाः विलासमयवातावरणे पूर्वीयक्षितिजे हिमांशु-शेषकलासदृशशय्यायां शयानास्ते ।

एवमेव शिवपार्वत्योः प्रेमापि जीवनाय प्राप्यमस्ति । इन्दुमती-वियोगावसरेऽजेन-योद्गाराभिव्यक्तिः कृता, तया कालिदासीयप्रेमसम्बन्धिनी मान्यता स्पष्टा जायते । जीवनाय प्रेम पाथेयमस्ति । तदभावे जीवनं शुष्कमस्ति । नारी प्रेम्णः सर्वोत्तमाधारोऽस्ति । अजः कथयति—

गृहिणी सचिवः सखी............... ।

—रघु ८।६७ ।

अज इन्दुमतीं सर्वस्वां मनुते । तस्मै संसारसार इन्दुमती वर्त्तते । अत एतत्स्पष्टमस्ति यत् कालिदासः प्रेमप्रधानः ( रोमाण्टिक ) कविः सन्नपि स प्रेम्ण उत्कृष्टरूपमेव समादृतवान् । यत्र प्रेम्णि कालुष्यमुत्पन्नं भवति, तत्र वासनाप्राधान्यमवाप्नोति, तत्रैव कविः येन केनापि प्रकारेण शापयोजनां करोति । अभिशप्तश्च स्ववासनां परिष्कृतां विधाय विशुद्धं प्रेम प्राप्नोति । एतदेव प्रेम जीवनस्य सर्वस्वमस्ति ।

यौवनेन सौन्दर्येण च साकं कालिदासस्य प्रेम्णः घनिष्ठः सम्बन्धोऽस्ति । तस्य जीवनदर्शनस्यायामो भोगवादं यावदेव न सीमितोऽस्ति, प्रत्युतानन्दकामनां यावदस्ति । कविनोक्तं यद्यथा रंगारोपेण चित्रं विकसति, तथैव यौवनागमेन नारीसौन्दर्यं विकसति ( कुमारसम्भव २।३२–३३, ३ कुमार० ५।३५ ) कोकिला भामिनीः मानत्यागाय विनयति । यतः यौवनं गतं पुनर्नायाति । (१ रघुवंश ९।२२) । कालिदासः सौन्दर्यं लावण्यञ्च पापवृत्ति-कारणं नामन्यत । स उक्तवान् यत् सौन्दर्यं पापवृत्तिमूलं नास्ति ( कुमारसम्भव ५।३६ ) कालिदासः सौन्दर्यस्य मूर्त्तिमद्रूपचित्रणे विभिन्नाङ्गानां लावण्यस्य पृथक्-पृथक् विवेचनं करोति । तस्यैतच्चित्रणस्यैका विशेषतास्ति यत्स समग्ररूपस्याभासं दातुमपार्थिवकल्पनालोके विचरणं करोति "स पार्वतीसौन्दर्यचित्रणं त्रिलोकसौन्दर्यमिवोदितं वपुः" उक्त्वा कृतवान् । ( कुमार ५।४१ ) उमाशरीरे त्रैलोक्यसौन्दर्योदयो जातोऽस्ति ।

कविकालिदासस्य जीवनदर्शनस्याभिन्नमङ्गं प्रेमसौन्दर्यञ्चास्ति । स सौन्दर्य-बोधमूलाधारजीवनं प्रेम एव मनुते । एतज्जीवनं मनुष्ये, पशौ वनस्पतौ च सर्वत्रैवास्ति । विलास-वैभवयोरयं कविरस्माकं धराया एतावान् समीपवर्ती वर्त्तते यत् प्रत्येकं भौतिकवादि वस्तु स स्पष्टं पश्यति । तस्य दृष्टौ वनलतोद्यानलतयोः सौन्दर्ययोः महत्पार्थक्यमस्ति । शकुन्तलायाः सौन्दर्यं वनलतासदृशमस्ति । तस्याः वपुरव्याजमनोहरमस्ति । वल्कलधारिण्यपि सा परममनोज्ञा लक्ष्यते । तस्याः रूपमनाघ्रातं पुष्पम्, अलूनं किसलयम्, अनाविद्धं रत्नम्, अनास्वादितं नवमधु, अनघमखण्ड

पुण्यानां फलञ्चास्ति। प्रेमिणः रूपतल्लीनता तामात्मलीनां करोति। प्राकृतिकोपमानैः नारीतुलनां कुर्वन् कालिदासः रूपजन्यानन्दातिरेकस्यव्यञ्जनामपि करोति। आभरणं दधानोमा नक्षत्रमण्डितत्रियामा-सदृशी प्रतीयते। एवमेव कौशेयवस्त्रावृता सा क्षीरोदवेलेवसफेनपुञ्जा' प्रतिभाति। (कुमार ७।२६) एवंप्रकारेण कविकालिदासः जीवनकृते प्रेमसौन्दर्यञ्चावश्यकंममन्यत।

डा० वासुदेव शरणाग्रवालेनः कालिदासस्य जीवनदर्शनस्य विश्लेषणं कुर्वता व्यलेखि यद् शिवस्वरूपस्य यथार्थज्ञानमेव कालिदासदर्शनसाधनयोः ज्ञानमस्ति। तन्मतमस्ति यत् पार्वती सुषुम्नायाः नामास्ति। हिमालयः मेरुदण्डमस्ति, यस्य मध्ये सुषुम्नास्ति। शिवो मदनं भस्मसात् चकार। तत्पश्चात् पार्वतीतपस्यया सुषुम्नासंयोगेन योगसाधनया शिवपार्वत्योः विवाहः सम्पन्नः। व्यक्तेरधोमुखी चिदात्मकशक्तिरन्तर्मुखी भूत्वा सहस्रदले स्थिता परविन्दुशिवे संयुक्ता भवति। पुनः विषयेभ्यः तस्याः न काचन भीतिर्जायते।

डा० अग्रवालस्येयं व्याख्या कुंमारसम्भवस्याध्ययनेनोचिता न प्रतीयते। यतः शिवः पार्वतीतपसाकृष्टः तां स्वशिष्यां सम्पादितवान्। तस्य सा शिष्या योगाभ्यासिनी नास्ति, प्रत्युत सुरताभ्यासिन्यस्ति। कवेरुक्तिरियम्—

शिष्यतां निधुवनोपदेशिनः शङ्करस्य रहसि प्रपन्नया
शिक्षिते युवतिनैपुण्यं तया यत्तदेवगुरुदक्षिणीकृतम्।

—कुमार० ७।१०।

स्पष्टमेतद्यत् पार्वतीगुरुः निधुवनोपदेशी वर्त्तते। सा तादृशगुरोः यां शिक्षां गृहीतवती तत्प्रतिफलस्वरूपं तया दक्षिणायां 'युवतिनैपुण्यं' समर्पितम्। अतः स्पष्टमेतद्यत् कालिदासस्य जीवनदर्शनं रहस्यवादि नास्ति।

कालिदासो विश्वं शिवरूपं मनुते। अतस्तत्सहानुभूतिक्षेत्रं व्यापकमस्ति। स मानवजीवनं क्षणभङ्गुरमुक्त्वा वैराग्योपदेशं न ददाति। तद्वर्णितराजसु कियन्तो वृद्धावस्थायां विरक्ताः सन्तः वनशरणं गृह्णन्ति। परन्तु कवेरास्था वैराग्येऽस्मिन्नास्ति। स गृहस्थधर्मे स्थित्वा शिवसाधनां कारयति। स प्रकृतेः मानवस्य च प्राणस्पन्दनं शृणोति तथैतज्जीवनं स्वकलाया आधारं कलयति। सोऽनेकपौराणिकदेवेषु नान्धविश्वासं करोति फलतः पौराणिकगाथानामुपयोगं काव्यचमत्कारकृतएव स कृतवान्। तन्मते गङ्गापि शम्भोरम्भोमयीमूर्तिरस्ति। ब्रह्मा, विष्णुः, महेशश्च 'एकैव मूर्तिर्विभिदे त्रिधा सा', एकस्या एव मूर्त्तेः त्रयो भेदाः सन्ति। अतः स्पष्टमेतद्यत् कालिदासो धार्मिकाग्रहमुक्तोऽस्ति।

---

१. मेघदूतः एक अध्ययन, राजकमल प्रकाशन, दिल्ली।

प्रचलितविश्वासादृते कालिदासो मानवत्वमारोप्य नवरोचकगाथानां कल्पनां करोति। मेघदूतमेतस्य श्रेष्ठमुदाहरणमस्ति। कालिदासो लोकोत्तरकल्पनया सार्धं यथार्थमपि स्वीकरोति। सकलङ्कं चन्द्रमसं वीक्ष्य संस्कृतकवयोऽद्भुतकल्पनाचमत्कारं दर्शितवन्तः, परं कालिदासश्चन्द्रमसि पृथ्व्याश्छायां मत्वा तद्यथार्थाङ्कनं करोति।
( रघुवंश १४।३० )।

'छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः' बालचन्द्रमाः सूर्यतेजो गृहीत्वैव वृद्धिं गतोभवति। कविरेतत्तथ्येन सुपरिचितोऽस्ति। अतः स चन्द्रमसश्चित्रणं यथार्थभूमौ स्थित एव करोति। स कथयति—

'पुपोष वृद्धिं हरिदश्वदीधितेरनप्रवेशादिव बालचन्द्रमाः' कविनाश्वान् वर्णयता तेषां सैन्धवावलेहनक्रियाया अपि निरूपणं कृतम्—

वक्त्रोष्मणा मलिनयंति पुरोगतानि,
लेह्यानि सैन्धवशिलाशकलानि वाहाः।

—रघुवंश ६।७३।

कविः कल्पनावसरे यथार्थमपि न त्यजति। स महिषान्, जृम्भां कुर्वतो मृगान् मुस्ताक्षतिञ्चरतो वराहान् यथार्थसंवलितकल्पनाचित्रणविषयान् करोति—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितम्—
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु,
विस्रब्धं क्रियतां वराहततिभिः मुस्ताक्षतिः पल्वले,
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः।

—अभि० २।६।

महाकविकालिदासस्य काव्योत्कर्षः उपमानेभ्यः प्रसिद्धोऽस्ति। सांसारिक-विभिन्नवस्तुसाम्यदर्शन-सहजक्षमता कालिदासे विद्यमानास्ति। तस्योपमानानाम-धिकोंऽशः सूक्ष्मेन्द्रिय-बोधस्य सौन्दर्यग्राहिकावृत्तेश्च परिचायकोऽस्ति। अजशोक-व्यञ्जनां कुर्वन् कविरुक्तवान् यत् यथा प्लक्षप्ररोहः सौधतलं भित्वा नीचैः निःसरति तथैव शोकेनाजहृदयं विद्धम्।

तस्य प्रसह्य हृदयं किलशोकशंकुः
प्लक्षप्ररोह इव सौधतलं बिभेद।

—रघु० ८।९३।

अजविजयेन प्रसन्नाया इन्दुमत्याः मुखं स्वच्छदर्पणमिव दीव्यति। स्नाता

पार्वती पर्जन्यजलाभिषिक्तप्रफुल्लाकाशवसुधेव प्रतीयते। स्पष्टमेतद्यत् कविनोपमानं प्रकृतेर्गृहीतम्। अत एतत्सुतरामनुमीयते यत् कविः नगरापेक्षया प्रकृतिप्रिय एवाधिको वर्त्तते।

कविकलायाः श्रृङ्गारः सुकुमारसमवेदनाऽस्ति। एताः समवेदनाः न केवलं वस्तुरूपग्रहणं कुर्वन्ति प्रत्युत तज्जीवनस्पन्दनमपि श्रृण्वन्ति। तस्य सहानुभूतिः सामन्तव्यवस्थया सामन्तकाव्यपरम्परया वा नास्ति। यद्यपि काव्यरूढावावद्धेन तेन सामन्तव्यवस्थाया आश्रयोगृहीतः, परन्तु स हृदयेन तस्याः व्यवस्थायाः पोषको नास्ति। तथाहि शारद्वतः दुष्यन्तसमीपे शकुन्तलां त्यक्त्वा गच्छन् ब्रवीति यत्पतेः प्रभुता सर्वतोमुखी वर्त्तते। स पत्नीं गृह्णातु त्यजतु वा। शार्ङ्गरवोऽपि शकुन्तलां पतिगृहे दासीभूत्वा निवासायोपदिशति। परन्तु सामन्तवादविरोधिकविकालिदासः शकुन्तलया दुष्यन्तं भर्त्सितं कारयति। सा कथयति—

अणज्ज ! अत्तणो हिअआणुमाणेण पेक्खसि। को दाणिं अण्णो धम्मकञ्चुअप्पवेसिणो तिणच्छण्णकूवोवमस्स तव अणुकिदिं पडिवदिस्सदि। (अनार्य, आत्मनोहृदयानुमानेन पश्यसि। क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते।

अपि च—सुट्ठु दाव अत्त सच्छन्दचारिणी किदम्हि, जा अहं इमस्स पुरुवंसप्पच्चएण मुहमहुणो हिअ अट्ठि अविसस्स हत्थब्भासं उवगदा। (सुष्ठु, तावदत्र स्वच्छन्दचारिणी कृतास्मि, याहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थितविषस्य हस्ताभ्याशमुपगता।

कविः सीतामपि यथार्थरूपामुपस्थापितवान्। गर्भवतीं सीतां यदा वने विहाय लक्ष्मणश्चलति तदा सीता रामं राजरूपं स्मरति। रामायातोऽधिका का भर्त्सना भविष्यति। सीता कथयति—

> वाच्यस्त्वया मद्वचनात्स राजा ह्यग्नौ विशुद्धामपि यत्समक्षम्,
> मां लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य।
>
> —रघु० १४।६१।

स्पष्टमेतद्यत् कालिदासः सौन्दर्यवादो भवन्नपि यथार्थदूरे नास्ति। तत्पात्रेषु जीवनस्योभयपक्षयोः समन्वयः प्राप्यते। यौनप्रेम-सौन्दर्येच्छावात्सल्यानि च पशुष्वप्युपलब्धानि सन्ति। मानवसमाजे सर्वेषामेतेषां विकासः क्रियते। यदा मानवेषु तेषां ह्रासो भवति, तदा स पशुभ्योऽपि पतितो भवति। कालिदासः स्वग्रन्थेषु सर्वत्रैतत्तथ्यस्य योजनां कृतवान्। संक्षेपरूपेण कविजीवनदर्शनस्य सारांशो निम्नांकितो वर्त्तते—

'आपन्नार्त्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम् ।'

—पूर्वमेघ ५३ ।

'आदानं हि विसर्गाय सतां वारिमुचामिव ।'

—रघु० ४।८६ ।

'मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते ।'

—रघु० ८।८७ ।

'सरस्वती श्रुतिमहती महीयताम् ।'

—अभिज्ञान शाकुन्तल ७।३५ ।

'कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ।'

—पूर्वमेघ ५ ।

परोपकारः, सम्पत्तेः परोपकारायोपयोगः, उद्दामयौवनागमेऽपि संयमः, विकारहेतावपि विकारराहित्यम्, जीवनस्य महनीयभोगानां भोगकालेऽपि विवेकः, एतान्येव तत्त्वानि जीवस्य लक्ष्यभूतानि सन्ति। प्रेम, सौन्दर्यम्, जीवनस्य भोगोपभोगौ चैतानि न गर्हितानि सन्ति। भोगः प्रेयोऽस्ति, परन्तु श्रेयोमार्गं प्रेमप्राङ्गणत एव निःसरति। कर्मविहितं प्रेम वरेण्यमस्ति। शिवमानसे कामस्यासामयिकः क्षोभः समाधिसुखविनाशकः पापमस्ति। एतादृशः कामः भस्मसात् जायत एव। परन्तु कर्मबन्धावद्धकामादेव कुमारजन्म जायते, येन लोककल्याणस्य सर्जनं भवति।

# विक्रमोर्वशीय नाटकस्य चतुर्थाङ्के ग्रथितानां प्राकृत-पद्यानां काव्यमूल्याङ्कनम्

प्राध्यापको डा० राजाराम जैनः

१

महाकविकालिदासः सार्वभौमः कविरस्ति । अनुपमपदविन्यासस्य काव्य-गरिम्णश्च प्राप्तिः तस्य समस्तनाटकेषु काव्येषु च भवति । प्रकृतेः वर्णनमन्तर्भाव-निरूपणञ्च कविः परमपटुतया प्रदर्शितवान् । स्वविलक्षणकल्पनायाः काव्यकौशलस्य च बलेन स मानव-स्वभाव-सम्बन्धे तादृशीरनेक-वार्त्ताः कथितवान्, याः ध्रुवसत्याः सन्ति । तस्य रचनासु भारतीय-साहित्य-परम्परायास्तथादर्शस्य च पूर्ण-दिग्दर्शनं भवति । कालिदासस्य शृङ्गारः जीवनं मधुमयं करोति, वासनपूर्णं न विदधाति । स प्रेयस उपरि श्रेयसः प्रभुत्वं प्रदर्शयति, तद्दृष्टौ हेयं वस्तु सदा हेयमेव तिष्ठति । यस्मिन् शृङ्गारे वासनाधिक्यं भवति, विवेकस्य चाभावो जायते, स शृङ्गारो-हेयोऽस्ति । यतएवंविध-शृङ्गारेण व्यक्ति-समाजोभयाहितं भवति । तन्नाटकेषु मानव-मानसिकक्रियाणां प्रतिक्रियाणाञ्च तच्चित्रमस्ति, यदद्यापि मानवेभ्यः दर्पणसमानं विद्यते । वस्तुतः वयं तत्पात्राण्युल्लसितानि दृष्ट्वा हर्षमग्नाः भवामः । विलापं कुर्वन्ति वीक्ष्य दुःख-विह्वलाः भवामः । एवमेव तानि शोकमग्नानि विलोक्यास्माकं वेदनानुभूतिर्जायते । साहित्यस्यैष एव सर्वोत्तमो निकषो वर्त्तते ।

कालिदासस्य साहित्य-साधना समस्त-संस्कृत-वाङ्मयाय बौद्धिक-भावात्मक-मानसिक-विकासेषु शृङ्खलैका विद्यते । तेन यत्र यो भावश्चित्रितस्तत्र सोऽस्मान् वर्षर्तु-नदीभ्यः प्रवाह्य प्रशान्तमहासागरं नयति । प्रणयिनः प्रणयिन्याश्च संभोग-विलासं शीलसौष्ठवं प्रति स आस्थानुरागं व्यनक्ति । राष्ट्रस्यामर-गायकः कविः सांस्कृतिकपरम्परायाः यथेष्टपोषणं कृतवान् । वयमत्र तत्समस्तकाव्यानां मूल्यमङ्कितुं न शक्ष्यामः । केवलविक्रमोर्वशीय चतुर्थाङ्कीयैकत्रिंशत्प्राकृतपद्यानां काव्यसौन्दर्यस्य विश्लेषणं करिष्यामः ।

विक्रमोर्वशीय चतुर्थाङ्कस्य प्रारम्भ एव प्राकृतपद्येन भवति। नेपथ्याद्ध्वनि-रायाति—'एकस्मिन् तडागजल उपविष्टा हंसी स्वप्रियसखी-विरहे-रोदिति' कविः प्रारम्भादेव विरहवातावरणं प्रस्तोतुं प्रतीकरूपेण हंसीं गृहीतवान्। हंसी स्वसखी-वियोगेऽन्यमनस्का भवति। अन्यत्र सूर्य-रश्मि-स्पर्शेण सरोवरस्य कमलानि विकसितानि भवन्ति। एवं कविरेकस्मिन्नेव पद्ये दृश्यद्वयं प्रस्तुतवान्। एकत्र हंस्याः विमनस्कतान्यत्र सूर्यकरस्पर्शेण कमलस्य विकसनशीलता च पुरूरवस उर्वश्याश्च पुनर्मिलनस्य संकेतभूते वर्तेते। महाकविना व्यञ्जनया एतदुभयतथ्ययोः समावेशः परमकुशलतया कृतः। गाथास्वरूपं निम्नांकितमस्ति—

पिअ सहि विओअ विमणा सहिँ हंसी वाउला समुल्लवइ,
सूरकरफंस-विअसिअ तामरसे सरवरुसंगे।

—विक्रमो० ४।१।

द्वितीयपद्ये पुनः कविरस्मभ्यं संकेतमेकं ददाति। स हंसीद्वयं सखीवियोगेऽश्रुपातयत् प्रस्तौति। अत्र द्वेऽपि हंस्यौ—उर्वशीसख्योः चित्रलेखा-सहजन्ययोः प्रतीक-स्वरूपे स्तः। हंस्योः व्याकुलतया रोदनेन चोर्वश्याः शीघ्रभावी वियोगोध्वन्यते। सख्यौचोर्वशीवियोगप्रतारणया विलपतः। यद्यपि द्वितीयतृतीयपद्ययोः साम्यमस्ति तथापि कविरेताभ्यां यस्य वातावरणस्य मधुरिम्णः प्रस्तुतिं कृतवान् सोऽत्यन्तमहनीयोऽस्ति। समस्तकथावस्तु व्यञ्जनारूपे समक्षमायाति। दर्शकैः पाठकैश्च नेपथ्यध्वन्यैव नाटकीयवस्तु परिज्ञायते। वातावरणसौरभं स्वतीव्रतया मनउल्लसितं करोति। महाकविकालिदासो नेपथ्यएव प्रतीकात्मकोक्तवातावरणस्य सर्जनं करोति—

सहअरि दुक्खालिद्धअं सरवरअम्मि सिणिद्धअं,
वाहोवग्गि अणअणअं तम्मइ हंसीजुअलअं।

—विक्रमो० ४।२।

प्राकृत-पद्य-गद्ययोर्वर्णितवातावरणेनैतदनुमीयते यत्पुरूरवाः शयनं करोति। सूर्यस्य स्वर्ण-किरणाः वातायनपथेन तच्छय्योपरि पतन्ति। स च स्वप्न एवोर्वशी-वियोगानुभवं कुर्वन् तां प्राप्तुं चेष्टते। सख्याः सहजन्यायाः कथनेन, तत्पुष्टौ लिखितपद्येनोक्ततथ्यस्य स्पष्टीकरणं भवति। सहजन्या कथयति—

सहि ण खु तारिसा आकिदिविसेसा चिरं दुक्खभाइणो होन्ति। ता अवस्सं किं पि अणुग्गहणिमित्तं भूवोपि समाअमकारणं हविस्सदि। ( प्राचीदिशं विलोक्य ) ता एहि। उदअमुहस्स भअवदो सुज्जस्स उवट्ठाणं करेम्ह।

—विक्रमो० चतुर्थाङ्के, तृतीयपद्यानन्तरं प्रयुक्तं गद्यशकलम्।

स्पष्टमेतद्यद्वियोगसमयः सदैकसदृशो न तिष्ठति। वियोगानन्तरं संयोगावसर आयात्येव। अतः सख्यः सूर्यप्रार्थनोपक्रमं कुर्वन्ति।

संदर्भेऽस्मिन् महाकविः पुरूरवसं नगाधिराजरूपेण प्रस्तुतवान्। अयं नगाधिराजो वस्तुतो राज्ञोजीवनस्यच्छायास्ति। राजा स्वप्ने प्रियाहरणं पश्यति। जागरणे च मेघदर्शनं करोति। स तडितं प्रियां ज्ञात्वा तामनुधावति। महाकविना राज्ञ-एतस्याः मनोदशायाः नितान्तं सजीवचित्रणं कृतम्।

गहणं गइंदणाहो पिअविरहुम्मा अपअलिअ विआरो,
विसइतरु कुसुम किसलअ भूसि अणिअदेह पब्भारो।

—विक्रमो० ४।५।

अयं गजराजः स्वप्रियावियोगे मत्तो भूत्वा स्वमनोव्यथां प्रकटयितुं वृक्षाणां मृदुलपत्रैः पुष्पैश्च स्वशरीरमलङ्करोति। स उद्विग्नो भूत्वा गहनवनं प्रविशति।

एवं पुरूरवसं कविः गजराजप्रतीकरूपेण प्रस्तुतवान्। तस्य तीव्र-व्यञ्जनां पुनर्हंसप्रतीकेण करोति—

हिअआहि अपिअ दुक्खओ सरवरए धुदपक्खओ,
वाहोग्गअ णअणओ तम्मइ हंसजुआणओ।

—विक्रमो० ४।६।

अयं युवा हंसः स्वप्रियावियोगे पक्षपुटौ धुन्वन् नयनयोरश्रु धृत्वा सरोवर-उपविश्य क्रन्दति।

एवं प्रकारेण कविर्हंसरूपेण पुरूरवसमुपस्थापयति। कविः पुरूरवसो मनोव्यथां व्याकुलताञ्च प्रस्तुवन् नेपथ्येन ध्वनिं कारयति यत् 'अयं तत्कालवर्षी मेघः, राक्षसो नास्ति। अस्मिन् चित्रितोऽयमिन्द्रस्य चापो वर्त्तते। नेदं राक्षसधनुरस्ति, न वेमे विन्दुवर्षिणो बाणाः सन्ति। इमे जलविन्दवः सन्ति। इयं या निकषोपरि निर्मिता स्वर्णरेखा-सदृशी दीप्यति, सोर्वशी नास्ति, विद्युत्रेखा विद्यते'[1]।

संस्कृत-पद्ये निरूपिताया अस्याः शंकास्पन्द-स्थित्याः निराकरणं कविः प्राकृत-पद्येन करोति। स स्वीयां मुग्धावस्थां यथार्थरूपेण संप्राप्य तडितोऽनुभवं करोति। पुरूरवाश्शोचति यन्मम मृगनयन्याः प्रियाया अपहरणं कृत्वा कश्चन राक्षसस्तां नयति। अहं तामनुधावामि। परन्तु मह्यन्तु प्रियायाः स्थाने विद्युतो राक्षसस्य-स्थाने कृष्णमेघस्य च प्राप्तिर्भवति। कविरत्र नायकस्य भ्रान्तिमत्याः स्थित्याः हृदयग्राहि चित्रणं कृतवान्। कविः कथयति—

---

१. नवजलधरसन्नद्धोऽयं न दृप्तनिशाचरः। —विक्रमो० ४।७।

मइँ जाणिअँ मिअलोअणी णिसअरु कोइ हरेइ,
जाव णु णवतलिसामल धाराहरु वरिसेइ।

—४।८

वर्षतो वारिदान् वीक्ष्य पुरूरवसो वेदनाधिकं वर्द्धते। स च तेपु स्वभावना-रोपणं करोति। सोऽनुभवति यन्मेघाः क्रुद्धा एत्र जलं वर्षन्ति। अतः स शान्त्यर्थं प्रार्थयते कथयति, च यन्मेघा! क्षणं विरमत प्रियां प्राप्ते मयि युष्माभिः वर्षितव्यम्। तदानीमहं प्रियया सहैव सर्वमपि कष्टं सोढुं शक्ष्यामि। परन्तु मयैकाकिना कष्टसहनम-सम्भवं प्रतीयते।

पद्येऽस्मिन् कविना मेघो मानवरूपे दृष्टः—

जलहर संहर एहु कोपइँ आढत्तओ अविरलधारा सारदिसामुहकंतओ,
ए मइँ पुहविँ भमंतो जइ पिअँ पेक्खिमि तव्वे जं जु करीहिसि तं तु सहीहिमि।

—८।११

उन्मत्तः पुरूरवाः स्वपदमनुभूय मेघानादिशति यत्ते वर्षणाद्विरमेयुः। तत्क्षणमेव तं प्रकृतेः मधुर-वातावरणमाकर्षति। एतद्वातावरणं विप्रलम्भमुद्दीपयितुमुद्दीपन-मस्ति। महाकविनोद्दीपनाय भ्रमरगुञ्जनस्य कोकिलकाकल्याश्च परमावश्यकता स्वीकृता। पवन-प्रताडनेन कल्पतरुपल्लवाः विविधहाव-भावान् प्रदर्शयन्तो नृत्ये निलीनाः। पुरूरवसः प्रमत्तता वर्द्धते। स वर्षोपकरणान्येव स्वराजोपकरणानि मनुते। महाकविना एतदवस्थायाः प्राकृते निम्नप्रकारेण वर्णनमुपन्यस्तम्—

गंधुमाइअमहुअरगीएहिं वज्जंतेहिँ परहुअ तूरेहिँ
पसरिअपवणुव्वेलिअ पल्लवणिअरु सुललिअ विविहपआरं णच्चइ
कप्पअरु। ४।१२

कविनात्र राज्ञो भावना प्रकृतावारोपिता। तस्य मानसिकावस्थायाश्च प्रति-फलनमुपस्थापितम्। राज्ञः प्रेमोन्मत्तता वर्द्धते। स प्रियान्वेषणे प्रवृत्तो भवति। एवं मनुते यदुन्मत्तगजः पुष्पयुक्ते पर्वतीयवने प्रियाविमुक्तो विचरति। स कुसुमोज्ज्वले गिरिकानने विचरन् स्वचित्तस्य विभिन्नभूमिकाः स्पृशति। प्रिया-विरहेण तस्य मानसदशा प्रतिक्षणमुग्रा जायते। महाकविना नेपथ्ये राज्ञ एतस्या एव दशायाः सजीवचित्रणमकारि—

दइआरहिओ अहिअं दुहिओ विरहाणुगओ परिमंथरओ,
गिरिकाणणए कुसुमज्जलए गजजूहवई बहुझीणगई।

—४।१४

विरहस्य पराकाष्ठा तत्र भवति, यत्र नायकः स्वविवेकं विस्मृत्य चेतनेषु भेदं जहाति। यदा विरहस्यान्तरवस्थात्यधिकैंधते तदैषा पराकाष्ठावृत्तिरायाति। मेघदूतस्य यक्षोऽस्यामेवावस्थायां निलीनः 'धूमज्योतिः सलिलमरुताम्' सन्निपातं मेघं स्वप्रियासमीपे संदेशप्रेषणार्थं याचते। भावस्य पराकाष्ठैव नायकं तादृशं विदधाति। पुरूरवाः स्वप्रेयस्यन्वेषणरतो मयूरान् प्रति प्रार्थनां करोति यत् 'सर्वत्र विचरणशीला भो मयूराः! युष्माभिः मम प्रियतमा दृष्टा ?' सा चन्द्रमुखी हंसगामिनी मम प्रियावश्यमेव युष्मत्परिचिताभविष्यत्। अहं युष्मभ्यं तच्चिह्नानि वच्मि। यैः सावश्यमेव युष्मत्परिचयपथमागता स्यात्। वस्तुतो मम प्रियायाः कुञ्चिताः केशाः मयूरकेशपाशेभ्योऽपि सुन्दराः सन्ति। पुरूरवाः मयूरान्प्रतिकरबद्धमनुनयं करोति—

> बंहिण पइँ इअ अब्भत्थिअमि आअक्खहि मं ता,
> एत्थ वणे भम्मंते जइ पइँ दिट्ठी सा महुकंता।
> णिसमाहि मिअंक सरिसवअणा हंसगई,
> ए चिण्हे जाणीहिसि आ अक्खिउ तुज्झमइँ॥

—४।२०

भो मयूर! मम त्वाम्प्रति प्रार्थना वर्त्तते यद्यदि त्वया मम प्रिया क्वापि दृष्टा तदा मह्यं निवेद्यताम्। तन्मुखं चन्द्रतुल्यमस्ति। तद्गतिः हंससदृशी वर्त्तते। अस्तु, एतावानेव तस्याः परिचयः। एतावतैव सा परिचयपदवीमानीता भविष्यति।

राज्ञः विरहावस्थायाः पुष्टिः नेपथ्येन भवति। नेपथ्ये प्रतीकरूपेण पुरूरवाः गजोऽभिहितः। तस्य समस्ताः क्रियाः मनोभावाश्च नेपथ्यद्वारेणाभिव्यक्ताः। यानि पद्यानि कविनोपस्थापितानि तानि वस्तुतः दृश्यकाव्यस्य मर्माणि सन्ति। कथयन्तु नाम तानि प्रक्षिप्तानीति कतिपय आलोचाकाः। परन्तु तानि विना राज्ञो व्यथाया अभिव्यक्तिर्जायित एव नहि। वस्तुत एषा कालिदासस्यैव दूरदर्शिता यत्तेन पुरूरवाः शोकउन्मतगजरूपकं विधाय प्रदर्शितः—

> परहुअ महुरपलाविणि कंती णंदणवणसच्छंदभमंती,
> जइ पइँ पिअअम सा महु दिट्ठीता आ अक्खहि महु परपुट्ठी।

—४।२४

उल्लिखितपद्ये पुरूरवाः स्वंप्रियतमासंकेतं कूजन्तीं कोकिलां पृच्छति। पुरूरवाः हंसं वीक्ष्य मनुते यदेतेन मम प्रियतमाया एव मन्दगमनमधीतम्। अतोऽवश्यमेवानेन मम प्रिया दृष्टा। स हि हंससमक्षं स्वहार्दिकवेदनामुपस्थापयन् कथयति—

रे रे हंसा किं गोइज्जइ गइअणुसारें मइँ लक्खिज्जइ,
कइँ पइँ सिक्खिउ ए गइलालस सा पइँ दिट्ठी जहणभरालस ।

—४।३२

एवंप्रकारेण महाकविकालिदासेन पुरूरवा: गज-पर्वत-समुद्रादीन् प्रति प्रिया-संकेत-प्रश्ने नियोजित: । महाकविना पुरूरवस इयं हार्दिकवेदना प्राकृत-पद्येषु निबद्धा । एवं ज्ञायते यद्येषां भावानामभिव्यक्ति: संस्कृते काठिन्येन भवति तेषामभिव्यक्ति: प्राकृते कृता । उदाहरणार्थमिह कतिपयानि पद्यान्युपस्थाप्यन्ते—

फलिह-सिला हअ णिम्मलणिज्झरु बहुविहकुसुमेँ विरइअसेहरु,
किंणरमहुरुग्गीअ मणोहरु देक्खावहि महु पिअअम महिहरु ।

—४।५०

स्फटिकशिलाखण्डेषु वहत उज्ज्वलान् निर्झरान् धारयन्, विविधवर्णपुष्पै: स्वशिखराणि समलङ्कुर्वन् किन्नर-दम्पत्यो: गीतै: रमणीय ! हे पर्वत ! मम प्रियां वारमेकमपि दर्शय !

एवं पुरूरवा: गज-हंस-मयूर-कोकिल-चक्रवाकभ्रमर-पर्वत-मृग-नदी-प्रभृतिचेत-नाचेतनान् प्रति स्वप्रियासंकेतं पृच्छन् संतोषमावहति । महाकविना सर्वाणीमानि मर्मस्थलस्पर्शि-पद्यानि प्राकृते निबद्धानि । संस्कृतपद्यैरेतादृशा: सरसभावा: नाभि-व्यक्ता: । पुरूरवा: मृगीं प्रियासंकेतं पृच्छन्नुर्वश्या: या शरीराकृतिर्व्यक्ता, तदाधारे रेखाचित्रद्वारेणोर्वश्याश्चित्राङ्कनं संभाव्यते—

सुरसुंदरि जहणभरालस पीणुत्तुंग घणत्थणी,
थिरजोव्वण तणुसरीरि हंसगई ।
गअणुज्जलकाणणेँ मिअलोअणि भमंती,
दिट्ठी पइँ तह विरह समुद्दतरेँ उत्तारहि मइँ ।

—४।५९

नितम्बयोर्महत्त्वेन मन्दगमनोत्तुंग-पीन-स्तनी, चिरयुवती, कृशकटी, हंस-गमनी, मृगनयनी त्वयोर्वशी यदि दृष्टा गगनसमानोज्ज्वले वने भ्रमन्ती तदा, तस्या: संकेतमुक्त्वा मां विरह-सागरात्तारय ।

उल्लिखित विवेचनैर्ज्ञायते यन्महाकविकालिदासेन गहनभावनाभिव्यक्तिकृते

---

१. मोरा परहुअ हंस रहंग अलि अग पव्वअ सरिअ कुरंगम,
तुज्झह कारण रण्णभमन्ते को णहु पुच्छिअ मइँ रोअंते । —४।७१

प्राकृतपद्यानां प्रयोगः कृतः। इमानि पद्यानि महाकविविरचितानि सन्ति। एतस्य पुष्टिः अनेकविदुषां कथनेन भवति। सन्दर्भस्य भावपृष्ठभूमेरवलोकनेन स्पष्टमेतद्यत् विरहस्य वास्तविकाभिव्यञ्जनार्थं प्राकृतपद्यानामावश्यकता वर्त्तते। महाकवि-कालिदासातिक्तैरन्यैरेतादृशी कल्पनासंभाव्या।

एतेषां पद्यानां भाषापभ्रंशसमीपे वर्त्तते। छन्दोऽप्यपभ्रंशसाहित्ये व्यवहृतमस्ति। अस्माभिरत्र भाषावैज्ञानिकं व्याकरण-सम्बन्धि-विवेचनं न प्रस्तूय केवलकाव्य-मूल्योपरि प्रकाश-प्रयासः कृतः।

अपभ्रंशभाषायाः पद्येषु कविः प्रवृत्त्यनुसारमुपमालङ्कार-योजनां कृतवान्। प्रायः सर्वेषु पद्येषूपमानं निःस्यूतमस्ति। वयमिहोक्तपद्यानां कतिपयोपमान-सौन्दर्योपरि प्रकाशं दास्यामः।

काव्यमूल्यदृष्ट्या समस्तपद्येष्वेषु विशेषता उपलब्धाः सन्ति। कविः शब्दानां चयनमेतावत्या कुशलतया कृतवान्, यत् संगीततत्त्वं स्वयमेव सृष्टं जायते। विरहव्यञ्जनायै शब्दानां माधुर्य्यं कोमलत्वञ्च यावदावश्यकं तावदेव शब्द-नियोजनमपि सापेक्षमस्ति। कुशलकवेः शब्दनियोजनमेव विरहं व्यनक्ति। नेपथ्यादागच्छतां संगीत-ध्वनि-तत्त्वानां, वर्णानां, शब्दानाञ्च नियोजनं महत्या कुशलतया कृतमस्ति। एवं ज्ञायते यद्विरहः शरत्कालीन-नदप्रवाहसदृशः स्वयमेव प्रवाहितः भवन्नस्ति—

> चिन्तादुम्मिअ माणसिआ सहअरिदंसणलालसिआ,
> विअसिअ-कमलमणोहरए विहरइ हंसी सरवरए।
>
> —४।४

---

१. "यह और कुछ नहीं राजा के स्वयं जीवन की छाया है, जो वासना के मुखर हो उठने से 'प्राकृत' में फूट निकली है। कलिदास की इस कला को पकड़ पाना तो दूर रहा, लोगों ने इसे क्षेपक बना दिया। सोचा इतना भी नहीं कि कवि गुरु के अतिरिक्त यह सूझता भी किसे जो यहाँ जोड़ दिखाता। निश्चय ही यह अपूर्व नाटक दत्तचित्त हो सुनने का है कुछ किसी अंश को ले उड़ने का नहीं। धीरज धर ध्यान से सुनें तो सारी गुत्थी आप ही सुलझ जाय और 'प्राकृत' का कारण भी आप ही व्यक्त हो जाय।"
—कालिदास-ले० चन्द्रबली पाण्डेय (बनारस वि० सं० २०११) पृ० ८७-८८

हंसी चिन्तया दुर्मनस्कास्ति । शब्दावल्यपि तस्या इमामवस्थां प्रकटयति । पद्यपठनानन्तरं झटिति नेत्रयोः समक्षं विरहजन्यं वातावरणमुपस्थितं जायते । एवं ज्ञायते यत्कस्यचिद्विरहिणः विरहः शब्दधारायां प्रवहति । यद्यपि यमकानुप्रासाभ्यां शब्दनियोजनैः रससृष्टिर्भवति, तथाप्युल्लिखितपद्ये शब्दैरेव रससंवेगः समुपस्थापितः । अनिर्वचनीय-रसानुभूतेरुत्पत्त्यै प्रयासः शब्दैरेव कृतः । एष काव्यसिद्धान्तोऽस्ति यत् काव्यस्य वाच्यं सर्वत्र विशिष्टं भवति । वाक्यस्यैतदेव विशेषत्वं प्रकटयितुं भाषाकृतेऽपि विशेषत्वप्राप्तिरावश्यको जायते । महाकविनोक्त-समस्तपद्येषु शब्दान् ह्रस्वलघुरूपान् प्रयुज्य व्यावहारिकसाधारणत्वमतिक्रम्या-साधारणरूपेण वर्णयोजना विहितता, काव्य-संगीत-धर्मश्चोपस्थापितः ।

हिअअहि अपिअ दुक्खओ सरवरए धुदपक्खओ ।

—४।६

परहुअ महुरपलाविणि । —४।२४ । पिअअम विरह किलामिअवअणओ ।

—४।२८ ।

फलिहसिलाहअणिम्मल णिज्झरु (४।५–), पसीअ पिअअम सुंदरिए ( ४।५३ ) प्रभृतिपद्यैः हृदयास्फुटवार्त्ता भाषायामभिव्यक्ताः । एषु पदेषु संगीतस्येदृशी मधुरझंकृतिरस्ति, यया हृत्तंत्री सहठं शब्दायमाना जायते ।

कविना यत्रोक्तप्राकृतपद्येषु संगीतधर्मो नियजितः, तत्रोपमानद्वारेण चित्रधर्म-स्यापि स्थापना कृता । वहिर्जगतः कस्यचिद्वस्तुनः कस्याश्चिद्वाघटनाया. स्मृतिधृतं स्फुटास्फुटचित्रं मनःपटेऽङ्कितं कृत्वा तस्य सहायतया वक्तव्यस्याभिव्यक्तिकृते महाकविकालिदासेनोपमानानां ग्रहणं कृतम् । इन्द्रियानुभूतिद्वारेण येषां पदार्थानां संस्कारः हृदयपटलेषु पतति, त उपमानद्वारेणैव प्रेषणीयाः सम्पाद्यन्ते । कविनोर्वश्याः नख-शिख-सौन्दर्याभिव्यञ्जनाकृते—"मिअलोअणि" (४।८) (४।५६) मृगलोचनी, हंसगइ (४।२०, ४।५६) हंसगति, अंबरमाण (४।२३)—अंबरमान,–मेघसमानप्रभृत्युपमानानां व्यवहारः कृतः । 'मृगलोचनी'त्युपमानं केवलं नायिकायाः नयनविशालतामेव न द्योतयति, प्रत्युत नायिकायाः सतर्कताया अप्यभिव्यञ्जनां करोति । एतदुपमानं मनसोऽमूर्त्तभावाय मूर्त्तरूपं ददाति । एवमेव 'हंसगति'-उपमानेन नायिकायाः सुन्दरगत्या सहैव तल्लावण्यस्यापि बोधो जायते । 'अम्बर-सदृश' उपमानेन गजस्य कृष्णवर्णेन साकं तद्विशालरूपस्याप्यभिव्यक्तिर्जायते । एवं प्रकारेण महाकविकालिदासेन दैहिक-मानसिकाभिव्यक्तिकृते प्रकृतेर्विविधो-पमानानि प्राकृतपद्येषूक्तानि । एवं प्रकारेण कविनोपमानातिरिक्तान् गुणवाचकान्, क्रियावाचकान्, मानसिकावस्थावाचकान् शब्दान् प्रयुज्य विरहस्थितौ प्रकाशः

प्रदत्तः । 'गोरोअणा कुंकुमवण्णा'' (४।३६) 'दिट्ठी' (४।३२) सिविखउ (४।३२) सदृशैः गुणवाचक-क्रियावाचक-शब्दैः भावाः गतिशीलाः विहिताः । मानसिकावस्थाया अभिव्यक्तिः कविना शब्दयोजनया परमसुन्दरपद्धत्या कृता । शब्द एव हृदयस्य भावावस्थामुपस्थापयितुं समर्थोऽस्ति ।

पिअकारिणी विच्छोइअओ गुरुसोआणल दीविअओ,
वाहजला उल्लोअणओ करिवरु भमइ समाउलओ

—४।२९।

स्वप्रियायाः करिण्याः विरहस्य भयंकरेऽनले ज्वलन्, क्रन्दन् करी व्याकुलो भ्रमति ।

अपभ्रंशपरम्पराया अन्त्यानुप्राम-प्रवृत्तेस्तालच्छन्दसाञ्च सर्वप्रथमदर्शनमुक्तप्राकृतपद्येषु लभ्यते । एष्वनेकलोकगीतात्मकच्छन्दसां प्रयोगोऽस्ति । तेन च परवर्त्ति-कतिपयच्छन्दसामादिरूपाणां प्रतिनिधित्वं जायते । चर्चरीगीतीनां विशेषाध्ययनकृतेऽप्येषां पद्यानां माहात्म्यमस्ति । चतुर्विंशतिमात्रायुतमेतादृशमपिच्छन्द एकं विद्यमानमस्ति, यद्विद्वांसो 'रोला' छन्दस आदिरूपं ब्रुवते ।[1]

विक्रमोर्वशीयस्य चतुर्थांके प्रस्तुतपद्यानां विशदविश्लेषणं नात्र प्रसंगानुकूलमस्ति । प्रकाशित-संस्करणानामशुद्धिवशेन तत्संभवमपि नास्ति । किन्तु तस्य संक्षिप्तं वर्गीकरणं निम्नांकितमस्ति ।

गाथा—४।१, ४।४, ४।५
गाहू—४।३, ४।६, ४।१९, ४।३५, ४।४३, ४।४८, ४।६४, ४।७६
गाथिनी—४।१४, ४।२३
सिंहनी—४।५३
स्कन्धक—४।५०, ४।७१
दोहा—४।८, ४।३६, ४१
रसिकाछन्द—४।२४, ४।३२, ४।६९
छप्पय—४।५४
रड्डु—४।२८, ४।५४
मधुभार—४।४३
दुवई—४।२, ४।२९

महाकवि कालिदासेन प्रयुक्तानि विविधच्छन्दांसि भाषायां संगीतात्मकताया-

---

१. विक्रमो० २।१२

श्चित्रात्मकतायाश्चोत्पादने समर्थानि सिद्धानि । कविर्मर्नसोरसप्रेरणाभिव्यक्तिकृते शब्दालङ्कारैरर्थालङ्कारैः सह छन्दोयोजनां कृतवान् ।

वस्तुतोऽस्माकं शब्दस्यार्थः तद्ध्वनौ चित्रसम्पदिच तथा निर्भरो भवति, यथैतस्मिन् समस्त-संगीतमाधुर्ये चित्रसम्पत्तत्त्वेच पृथक् कृते शब्दस्य निरपेक्षार्थान्वेषणं कठिनमस्ति ।

कालिदास उक्त प्राकृतपद्येषु स्वप्रकृत्यनुसारं वैदर्भीं रीतिं प्रयुक्तवान् । प्रसादगुणोऽपि सर्वत्र समाविष्टोऽस्ति । कृत्रिमतायाः बलपूर्वकशब्दचयनचेष्टायाश्च क्वापि दर्शनं न भवति । अत एवोक्तप्राकृतपद्यानां भाषावैज्ञानिकदृष्ट्या काव्यदृष्ट्याच समानमेव मूल्यमस्ति ।

प्राध्यापक, संस्कृत-प्राकृत-विभाग
एच० डी० जैन कॉलेज, आरा,
( मगधविश्वविद्यालय )

# मालविकाग्निमित्रोक्तविदूषकस्य व्यक्तित्वविश्लेषणम्

प्राध्यापको रामनाथ पाठकः 'प्रणयी'

महाकविकालिदासेन त्रीणि नाटकानि प्रणीतानि—मालविकाग्निमित्रम्, विक्रमोर्वशीयमभिज्ञानशाकुन्तलञ्च। एतेषु नाटकेषु विवेचित-विदूषक-व्यक्तित्वं पृथक्-पृथक् परिलक्षितं भाति। वयमत्र 'मालविकाग्निमित्र' नाटकीय-विदूषकस्य व्यक्तित्व-विश्लेषणं करिष्यामः।

अस्य नाटकस्य विदूषकस्य 'गौतम' इति नामास्ति। अयं समस्तनाटकीय-विदूषकापेक्षया सर्वाधिकः प्रतिभा-शाली, दूरदर्शी, प्रत्युत्पन्नमतिस्तथोपायज्ञश्च-विद्यते। अयमन्य-विदूषक-सदृशो भोजनभट्ट एवं निद्रालुर्नास्ति। यद्यप्यस्य नाटकस्य विदूषकोक्तिषु भोजन-चिन्ता यत्र-तत्र परिलक्षिता भवति, तथापि बुद्धिहीनतायाः निद्रातुरतायाश्च क्वापि नाभासो लभ्यते। स स्वप्रियमित्रेणाग्निमित्रेण सह तत्प्रेयस्याः मालविकायाः सम्मिलनं कारयितुं विविधयुक्तीः समुपस्थापयति। स द्वयोः नाटकाचार्ययोर्मध्ये कलहमुत्पाद्य मालविकां राज्ञः समक्षं प्रस्तौति तथा तां प्रमदवने प्रेषयितुं षड्यन्त्रं विधाय राज्ञ्याश्चरण-वेदनां जनयति। नृपेऽपि स्त्रीदाक्षिण्यमवश्यमस्ति, परन्तु स स्वकार्य-व्यापार-सफलतायै विदूषकावलम्बितोऽस्ति। विदूषकः मालविकायां भूगृहे निक्षिप्तायां तां ततो मोचयित्वा। प्रमदवने तस्याः राज्ञा सह मिलनं कारयति। स प्रत्येककाले राज्ञो नर्म-साचिव्यं करोति। तस्य प्रेरणया प्रयासेन च राजानन्दोल्लासं रति-विलासञ्च प्राप्नोति। अत एवासौ नाटकेऽस्मिन् कामतन्त्रसचिवोपाधिना[1] विभूषितः।

'मालविकाग्निमित्र' स्याध्ययनेन ज्ञायते यद्विदूषके भक्ति-सेवा-प्रतिभा-प्रत्युत्प-

---

१. "इअं इमस्स कामतंतसचिवस्स णोदी" मालविकाग्निमित्र, चौख० सीरिज० सन् १९५१, अङ्क ४ पृ० १८९—

मतित्व-सहानुभूति-सतर्कता-भावात्मकदृष्टि-व्यङ्ग्योक्ति-क्षमता-नीतिज्ञतात्मसम्मान-प्रभृति-गुणाः वर्त्तमानाः सन्ति। शास्त्रीयदृष्ट्या तस्य व्यक्तित्वं संश्लिष्टव्यक्तित्वसंज्ञां यास्यति। रावर्ट० एम्० वुडवर्थमते संश्लिष्ट-व्यक्तित्वे व्यक्ति-व्यवहारस्य समग्रगुणानां प्राप्तिरावश्यकी। एतद्व्यक्तित्वं विविधचेष्टासु, सामाजिक वातावरणेषु पारस्परिक-क्रियासु च विकसति। तस्मिन् राजनैतिकार्थिकादि विभिन्नपरिस्थितीनामनेकसंघर्षाणां मानसस्यान्तर्द्वन्द्वस्य च निवासः परमापेक्षितः। अथापि प्रसन्नचित्ततोदासीनतयोः, स्पष्टवादिता-चाटुकारितयोः, दयालुता-क्रूरतयोश्च सदृशाणां विरोधि गुणानां समवायस्य प्राप्तिरावश्यकी वर्त्तते। तथैतेष्वेव विरोधि-धर्मेषु संश्लिष्टव्यक्तित्वस्य निवासः प्राप्यते। प्रस्तुतनाटकस्य विदूषके गुणानां समवायः कियान् कीदृशश्च जात इति तस्य व्यक्तित्वस्य प्रस्फुटनं कस्मिन्रूपे सञ्जातमित्येतत्सर्वं विचारणीयमस्ति। उक्तनाटके सर्वप्रथमं विदूषकस्य यद्दर्शनं भवति, तेन तस्य धीरतायाः परोपकारवृत्तेश्च परिचयो लभ्यते। राज्ञाग्निमित्रेण विदूषकं दृष्ट्वा कथ्यते यदयं मम कार्यस्यानन्यसहायकोऽस्ति। अत एव विदूषक-प्राप्त-स्वीकृतिर्नृपस्तं कार्यसिद्धेरुपायं पृच्छति। विदूषकः क्षणपर्यन्तं कार्यसिद्धेः सम्बन्धे योजनां शोचति। अकस्मादेक उपायो दृष्टिगोचरो भवति तथा स राजाति-समीपे गत्वोपायानां ज्ञानं निवेदयति। कालिदासेनाग्निमित्रः सहायकविदूषकस्य नितान्तप्रशंसकश्चित्रितः। नायकस्य विदूषक-निपुणतायान्तु विश्वासोऽस्त्येव तस्य तदीयपरोपकारवृत्तावपि परमास्थास्ति। अत एव राजा कथयति—

"साधु वयस्य! निपुणमुपक्रान्तम्। इदानीं दुरधिगमसिद्धावप्यस्मिन्नारम्भे वयमाशंसामहे" कुत :—

> अर्थं सप्रतिबन्धं प्रभुरधिगन्तुं सहायानेव,
> दृश्यं तमसि न पश्यति दीपेन विना[2] सचक्षुरपि ॥१९॥

स्पष्टमेतद्यत् कार्यसिद्धावुपस्थितान् विघ्नान् सहाय एव निवारयति। यथा तेजस्विषु चक्षुःसु सत्स्वपि दीपं विनान्धकारे वस्तुसाक्षात्कारोऽसम्भवोऽस्ति तथैव नायकदृष्टौ स्वकार्यसिद्ध्यर्थं परोपकारि-विदूषकस्य स्थितिरनिवार्या वर्त्तते। राज्ञस्तदीयसहायकत्वे पूर्णो विश्वासो विद्यते। अत एव स नेपथ्ये व्यक्तिद्वयमध्य उपस्थितं कलहं श्रुत्वा विदूषकं प्रति वक्ति—

---

१. मनोविज्ञानम्० अपरइंडिया पब्लिशिंग हाउस, लखनऊ, १९५० पृ० सं० ५३-६६।

२. मालविकाग्निमित्रम्। —चौ० सी० १९५१, पृ० सं० २८।

"सखे त्वत्सुनीतिपादपस्य पुष्पमुद्भिन्नम्"[1]

हे मित्र ! त्वन्नीतिवृक्षा इदानीं पुष्पाण्यलङ्करिष्यन्ति । त्वादृशो नीतिज्ञो यत्कार्यं करे गृह्णाति, तत्सफलमेव । मालविका-दर्शनाय यस्त्वयोपायो रचितस्स त्वरितमेव फलिष्यति । नायकस्योक्तकथनं श्रुत्वा विदूषकस्तं धैर्यं यच्छन् शीघ्रफलप्राप्तेः प्रलोभनमुपस्थापयति—

"फलं वि अइरेण दक्खिस्ससि ॥

एवं प्रकारेण महाकविकालिदासेन विदूषकस्य गौतमस्य व्यक्तित्वारम्भः परोपकारवृत्त्या कृतः । विदूषकस्यैषा वृत्तिरुत्तरोत्तरं विकसन्ती परिलक्ष्यते । गौतमस्य द्वितीयो गुणस्तस्य महती प्रतिभास्ति । सोऽवसरोचित-कार्याणां चिन्तनं तन्नियोजनञ्च तत्क्षणमेव विदधाति । स प्रतीकात्मिकां भाषां प्रयुञ्जन् व्यक्त्यन्तर-भावान् विचारांश्च महत्या कुशलतयोद्घाटयति । तस्य प्रतिभा मूर्त्तिमती भूत्वा प्रस्तुता भवति । नायकः प्रेयस्याः मालविकायाः दर्शनायोत्कण्ठितो वर्त्तते । तस्या-धीरनयने स्वधैर्यसीमानं छिन्दती स्तः । स एतावान् व्यग्रोऽस्ति यत् यवनिकां भित्त्वा तां प्राप्तुं समीहते । परन्तु स शीघ्रं तां प्राप्तुमसमर्थोऽस्ति । नायकस्यैतस्या अधीरतापूर्णमनोवृत्तेः प्रतीकमाध्यमेन विदूषकेन साधुविश्लेषणं कृतम्—

'उवट्ठिदं णअणमहु संणिहिदमक्खिअं च, ता अप्पमत्तो दाणिं पेक्ख[2] ।'

अत्र 'मधु'-प्रतीक-प्रयोगः नायिकायै वर्त्तते तथा मक्षिका-प्रतीक-प्रयोग इरावत्यै विद्यते । एवमत्र राज्ञाप्रमत्तेन सा दर्शनीयेति विदूषकस्य तस्मै संकेतोऽस्ति । एतेनैतद्ध्वन्यते यन्मालविकारूपमधुनः सेवनमावश्यकम् ।

तृतीयाङ्के यदा नायकः बकुलावलिकया मालविकया च सह वार्त्तालापं करोति तदा कार्यान्तरेण राजानमन्विष्यन्ती तस्य द्वितीया पत्नीरावती तत्रायाति । सा तत्र राजानं प्रणयव्यापारं कुर्वन्तं पश्यति । अस्यां परिस्थित्यां राजा व्याकुलो भवति । परन्तु विदूषको धैर्यं यच्छन् वदति—

'भो पडिपज्जेहि किं प उत्तरम् । कम्मग्गहीदेण विकुम्भीलएण संधिच्छेदे सिक्खिओम्मित्ति वत्तव्वं होदि[3] ' ।

तस्करतां कुर्वन् धृतस्तस्करोऽपि कथयति यदहं तस्करतां कर्त्तुं संधिच्छेदं न

---

१. मालविकाग्निमित्रम् । —चौ० सी० १९५१, पृ० सं० २८ ।
२. मालविका० द्वितीयांक, पृ० ५७ ।
३. कालिदासग्रन्थावली ( प्रथम संस्करण ) पृ० ३१० ।

कृतवान्, प्रत्युताहं संधिच्छेदे कियान् शिक्षितोऽस्मीति ज्ञातुं प्रवृत्त आसम् । स्पष्ट-मेतद्यद् विदूषकः प्रतिभाशाल्यस्ति । समये स उचितां वार्त्तामाशु ज्ञातुं प्रभवति । अत एव स राजानमिरावत्यै तदुत्तरं दातुं प्रेरयति । यदेरावतीदासी चन्द्रिका पुष्पचयनाय प्रमदवने समागच्छति, तदा राजा तां दृष्ट्वैव भीतो जायते, विदूषकं प्रति भित्तिगूहनार्थं वदति च । सन्दर्भेऽस्मिन् विदूषकोऽनुभूतिपूर्णश्लेषोक्त्या तं कथयति—

अहो कुम्भीलएहिँ कामुएहिँ च परिहरणीआ क्खु चन्दिआ[1] ।

अत्र चन्द्रिकाशब्दः श्लिष्टोऽस्ति । विदूषकश्चन्द्रिकया ज्योत्स्नायाः, चण्द्रिका-नाम्न्याः दास्याश्चार्थं गृहीत्वा राजानं प्रति व्यङ्ग्यं करोति । यच्चन्द्रिकायाः कामुकेन चोरेण चोभाभ्यामपि सतर्काभ्यां भाव्यम् । यतः चौराय चौरवृत्यर्थं प्रकाशोऽनपेक्षितः । कामिजनाय चन्द्रिका दाहिका भवति । विदूषकेनानयोक्त्या राज्ञः गुप्तप्रणय-संकेतः कृतः ।

यदेरावती मालविकां प्रति राज्ञो गुप्तप्रणयव्यापारं दृष्ट्वा रुष्टा भवति, तदा राजाग्निमित्रस्तामाश्वासयति । स कथयति यत् वकुलावालिका-मालविके बन्धन-मुक्ते क्रियेताम्, यतउत्सवदिने कृतापराधा अपि सेवकाः न बन्धने रक्षणीयाः । अतो यदेमे बन्धनमुक्ते जाते तदा मां प्रणमितुमागते । कार्येस्मिन् न ममापराधो न वैतयोरस्ति । इरावती राज्ञोऽनेनोत्तरेण न तुष्यति । सा निपुणिकानाम्नीं स्वदासीं धारिणीसमीपे निन्दनाय प्रेषयति । निवेदयति च यद्राज्ञः प्रणय-व्यापारो दृष्ट इति । अस्यावसरस्याभिव्यञ्जना विदूषकेणैकयैवोक्त्या प्रतीकैः सुन्दररूपेण कृता । एतेन तस्य महत्प्रतिभायाः परिचयो जायते । जायते च तस्य प्रतीकात्म-काभिव्यञ्जनशैली-परिचयः । स ब्रवीति—

'अहो अणत्थो संपडिदो बन्धणमहो गिहकवोदो विडालिआए आलोए पडिदो'[2] ।

विदूषकस्यास्यामुक्तौ व्यञ्जना दूरगामिनी वर्त्तते । स बन्धनमुक्तां नायिकां पञ्जरमुक्तकपोतरूपे प्रस्तौति । अथ सहसा भयस्वरूपामुपस्थितामिरावतीं मार्जारीरूपे समुपस्थापयति । विदूषक इरावत्यै मार्जारीरूपकं प्रदाय भयमातङ्कं च मूर्त्तं चकार । एवंप्रकारेण विदूषकस्य प्रतीकात्मक-भाषाप्रयोगेण तस्य प्रतिभायाः

---

१. कालिदासग्रन्थावली ( प्रथमसंस्करण ) पृ० ३२४ ।

२. कालिदास०, प्रथमसंस्करण, पृ० ३३५ ।

परिचयो जायते। विदूषको नायकाग्निमित्रस्य मालविकया सह परिणयं वाञ्छति। स महाराज्ञ्याः धारिण्याः ध्यानमाकर्षन् कथयति—

'भोदि तवणीआसोअस्स कुसुमसोऽहम्।'[1]

अत्र तपनीयाशोकपुष्पाणां विकासेन विदूषको धारिणीदेव्या प्रतिज्ञां स्मारयति। धारिण्या एषा प्रतिज्ञासीद् 'यदि मालविका-दोहद-सम्पादनेनाशोकपुष्पाणि समयपूर्वमेव विकसितानि भविष्यन्ति, तदा तस्याः विवाहोऽग्निमित्रेण सह सम्पन्नो भविष्यति।' यद्यपि तद्दृष्टौ सम्भ्रान्तनायकस्य कयाचिद्दास्या सह प्रेमपरिणयो राजधर्मप्रतिकूलोस्तः, तथापि सा स्वप्रतिज्ञापूरणाय वचनवद्धा वर्त्तते। अतएव विदूषकेण व्यङ्ग्योक्त्या तस्याः संकल्पः स्मारितः। राजापि स्वमिलने धारिणीं रात्रिमिव मनुते। अत उपायेन विदूषकः स्वबुद्धि-कौशलस्य नियोजनं कृत्वा तस्याः परिणयं राज्ञा सह कारयितुं समीहते। अत्रास्ति 'तपनीयाशोकस्य कुसुमशोभाम्'—पदं विशेषव्यङ्ग्यगर्भितम्।

मालविकाग्निमित्रस्य गौतमः संवेदनशीलोऽप्यस्ति। किमपि सुन्दरवस्तु प्रेक्ष्य तदीयैन्द्रिकानुभूतिरत्यन्त-तीव्रा जायते। प्रकृतेः दर्शनमात्रेण तस्याः मनोवासना पल्लविता भवति। वसन्तर्तौ पुष्पश्रियं वीक्ष्य स मुग्धो भवति। स नायकं प्रकृति-रसास्वादनाय प्रेरयति। स कथयति—

"अवहाणेण दिट्ठिं देहि, एदं क्खु भवंतं विअ विलोहइदुकामाए पयद। वण-लच्छीए जव दीवेसलज्जाव इत्तिअं वसन्त कुसुमणेवत्थं गहीदं"[2]

स्पष्टमेतद्यत् विदूषकस्य संवेदनशीलता नायकापेक्षयाधिका तीव्रा विद्यते। नायकोविरह-वेदनया पीडितोऽस्ति। अतएव तस्यानुभूतिशक्तिः क्षीणा वर्त्तते। सः प्रकृतेः रसास्वादनं साधु कर्त्तुं न शक्नोति। अतएव विदूषकस्तं सतर्कं करोति। तञ्च प्रकृतिसुन्दरी-दर्शनाय प्रेरयति। तस्यावलोकन-क्षमता व्यापिका विद्यते। यदा मालविका नायक-समक्षमुपस्थिता भवति, तदा विदूषकस्तस्याः सौन्दर्यं वीक्ष्य कथयति यदियं वस्तुतश्चित्राङ्कितां मालविकां सौन्दर्येणातिक्रामति। इयं चित्रे यादृशी सुन्दरी प्रतिभाति स्म, ततोऽपि विशेषलावण्यवती रमणीया चास्ति। उल्लिखितोद्धरणेन स्पष्टमेतद्यत् विदूषकस्य सौन्यर्य-बोध-शक्तिरुद्बुद्धा वर्तते। सः किमपि सौन्दर्यं प्रकृतिगतं वस्तुनिष्ठं वा शीघ्रमेवावगच्छति। विदूषकस्य स्पर्शेन्द्रियजन्यानुभूतिः कियती तीव्राविद्यते—इत्येतस्य ज्ञानार्थमेकमेवोदाहरणं पर्याप्तं भविष्यति।

---

१. कालिदास०, प्रथम सं०, पृ० ३४५।

२. कालिदासग्रन्थावली, अङ्क ३ पृ० २९५ (प्रथम संस्करण)

यदा स बकुलावलीं प्रच्छन्नां विदधाति, तस्याः रक्षायाञ्च नियुक्तो भवति, तदा स आसनबन्धधीरः, स्फटिकशिलायामुपविशति। स शिलायाश्शीतलसुखदस्पर्शमनुभवन् मुग्धो जायते। स सुखानुभूतिवशो निद्रां व्रजति। यथा—

"इमं दाव फलिहक्खम्भं अस्सिदो होमि (इति तथा कृत्वा) अहो सुहफ्फरिसदा सिलाविसेसस्स (इतिनिद्रायते)

प्रमदवने वसन्त-वैभवं व्याप्तमस्ति। जडचेतनानि सर्वाण्यनुरागाबद्धानि सन्ति। नीरसमानसेऽपि रससञ्चारो जायते। प्रकृतेः प्रत्येकमणुः सुखदः प्रतिभाति। विदूषकायैतद्दृश्यमतीवसुन्दरं लगति। तस्येन्द्रियाणां विस्तारो जायते। संवेदन-शीलतोद्बुद्धा जायते। स नायकं प्रति वक्ति यत् प्रमदवने वसन्त-यौवनं पुनरायातम्। शेफालिका विविधवर्णपुष्पस्तवकैराच्छादिता वर्तते। स्वर्णाशोकः स्वाभया समस्तप्रमदवनं प्रभावयति। मनसि निगूढाः वासना उद्बुद्धाः जायन्ते। विदूषकस्येमां प्रकृति-निरीक्षणसम्बन्धिनीमनुभूतिं नायकोऽपि समर्थयते।

महाकविकालिदासेन विदूषक-नायक-संवाद-द्वारेण संवेदन-शीलतायास्सुदरं चित्रणं कृतम्। "विदूषकः—(विलोक्य) भो वअस्स किं वि परिवत्तजोव्वणो विअ वसन्तो पमदवणे लक्खीअदि" "राजा—यथाह भवान्—

"अग्रे विकीर्णकुरवकफलजालकभिद्यमानसहकारम्,
परिणामाभिमुखमृतोरुत्सुकयति यौवनं चेतः"

"विदूषकः—(परिक्रम्य) अहो अअं सो दिण्णणेवत्थो विअ कुसुमत्थवएहिं तवणीआसोओ, ओलोअदु भवं।"

मालविकाग्निमित्रस्य विदूषके सहानुभूतेः पूर्णमात्रा लभ्यते। स सर्वदा नायकाय सान्त्वनां ददाति। यदा-यदा नायकः स्वासफलतायामुद्विग्नो भवति, विदूषकः धैर्यं ददाति। एतावदेव नहि स तर्क-युक्तिभ्यां नायकं प्रणयव्यापारे स्थिरं रक्षति। नायकोऽग्निमित्रः मालविका-वियोगे क्षीणः पीतश्च जातः। तस्य शारीरिकी क्षमता प्रतिदिनं हीना भवति। स मालविका-प्रेम्णो वास्तविकरूपेण ज्ञानादेवाकुलोऽस्ति। नायकस्यानया स्थित्या विदूषको वेदनान्वितो वर्त्तते। स तस्मै धैर्यं यच्छन् कथयति यद्यथा कामव्याधिपीडितस्त्वं तथैव मालविकापि पीडितास्ति। त्वं स्वप्रेमैकाङ्क्षि मावेहि। यावाननुरागस्तव तावानेव मालविकाया अपि। अतएव नैराश्यस्यावश्यकता नास्ति। मालविकाप्राप्तिः सुनिश्चिता वर्त्तते—

"एषा विभवं विअ मअणव्वाहिणा परिमिट्ठा भविस्सदि"[1]

---

१. कालिदास ग्रन्थावली (प्रथम संस्करण) पृ० २९७

अथापि

"अलं भवदो धीरं उज्झिअपरिदेविदेण । दिट्ठा मए तत्तहोदीए मालविआए पिअसही वडलाव लआ । सुणाविदा अअत्थं जो भवदा संदिट्ठो"

स नायकस्य शान्त्वनायै पुनरपि कथयति यन् मया श्रुतं श्रीमती मालविका भवन्तं प्राप्तुं भवतोऽपि विशेषाधीरा विद्यते । तस्यैतत्कथनमत्यन्तं स्वाभाविकं सहानुभूतिपूर्णञ्चास्ति । स नायकायैतादृशस्य कस्यापि शब्दस्य प्रयोगं न करोति, यस्तस्य सुकुमार-हृदयं तुदेत् । अतएव स स्व-वार्त्तायां सत्यतादर्शनायान्यश्रुते-र्हेतुमुपस्थापयति । स नायकायैतन्निवेदयितुमिच्छति यन्नायिकायाः साक्षात्कारं विनापि स दासदासीभिस्तस्याः मनोव्यथां वेत्ति । अतः "विदूषकः—सुदं भवदा उवकण्ठिदम्हि त्ति तत्तहोदी मन्तेदि"[1] केवलचाटुकारो नास्ति । स स्वनायकस्य कट्वालोचनामपि करोति । यदा नायको मालविका-दर्शनानन्तरं तां प्राप्तुं व्यग्रो-भवति तदा विदूषकस्तस्य कट्वालोचनां कुर्वन् कथयति यद् भवान् मांसलोलुप-गृध्रवत् मालविकायाः रूपासक्तोऽपि भयातङ्कपीडितोऽस्ति । भवत इयं द्वन्द्वस्थिति-र्मह्यन्तु रोचते परं भवते नेयमुचिता । तथाहि—

"विदूषक—किंतु मोहावलीणिरुद्धा जोण्हा विअपराहीणदंसणा तत्तहोदी भाविआ भवं वि सूणापरिसरचरो विअ विअगिद्धो आमिसलोलुओ भीरुओ अ"

अनेनोद्धरणेन विदूषकस्य निर्भीकता सिध्यति । विदूषको नायकस्य मर्यादां सदा रक्षति । यदेरावती नायकस्य मालविकया सह प्रेमालापं पश्यति, तदा सा राज्ञ एतत्कृत्येनाधिका रुष्टा भवति । तथा राज्ञो भर्त्सनां करोति । स कथयति यदस्योपरि नाक्षेप उचितो, नचाविश्वासः । देव्याः परिचारिकां मत्वैव स तया सह वार्त्तां कृतवान् । भवती नान्यथा गृह्णातु ।

'विदूषक :—मा दाव अत्तभोदो दक्खिण्णस्स उवरोहं करेहि । सभावदिट्ठेण देवीए परिचारि इत्थि आजणेन संकहावि जइ वारीअदि एत्थ तुमं एव्व पमणं ।[2]

मालविकाग्निमित्रनाटकस्य विदूषक-व्यक्तित्वे सर्वोत्तमगुणस्वरूपोपायज्ञता विद्यते । विदूषको मालविकां वकुलावलिकाञ्च कारागृहान्मोचयितुं कटिबद्धो भवति । स स्वहस्तेकेतकीकंटकेन सर्पदंशस्य चिह्नं रचयति तथा मिथ्यासर्पदंशस्य वार्त्तां प्रकटयित्वा सर्वं चिन्तितं करोति । तेन प्रचारितं यत् महाराज्ञ्याः धारिण्याः मिलनहेतुनाहं प्रमदवने पुष्पचयनाय गतवान् । तत्राहं कालसर्पेण दष्टः । राज्ञ्याः

---

१. कालिदास-ग्रन्थावली, पृ० २९८

२. कालिदासग्रन्थावली । —मालवि० ३।३११ ।

धारिण्या अनेन समाचारेण चिन्ता विवर्द्धिता । सा शोचितुं प्रवृत्ता यन्मम हेतोरस्य विदूषकस्य प्राणाः यान्ति, तदाहं ब्रह्महत्यापापेन कलङ्किता भविष्यामि । विदूषको विषवेगस्य स्वांगं निर्माय राजसभायामुपस्थितो भवति, यत्र राज्ञो राज्ञ्योश्चोपस्थितिर्वर्त्तते । तेन स्वरूपं तादृशं प्रदर्शितं येन सर्वे विश्वस्ता अभूवन् यदसौ वस्तुतः सर्पदष्टोऽस्ति । राजा तस्य विष-चिकित्सायै स्ववैद्यं ध्रुवसिद्धिमाहूतवान् । ध्रुवसिद्धिना तस्य विष-परीक्षा कृता । चिकित्सायाञ्च नागमुद्राया आवश्यकता ज्ञापिता । इदानीं सर्वेषां समक्षं एकस्य ब्राह्मणस्य जीवन-प्रश्न आसीत् । कोऽपि किमपि शोचितुमवसरं नालभत । धारिण्याः समीपे नागमुद्रान्वितमङ्गुलीयकमासीत् । राज्ञा तत्क्षणमङ्गुलीयकं विदूषक-प्राणरक्षार्थं समर्पितम् । अङ्गुलीयक दर्शन मात्रेणैवविदूषकस्य कृत्रिमो विषवेगः शान्तो जातः । इदानीं स मालविकां वकुलावलिकाञ्च कारावासान्मोचयितुमस्त्रमधिगतवान् । स तद्गृहीत्वा कारावासरक्षिका-समीपं गतः । स वक्तुं प्रारब्धवान् यद्दैवज्ञेन महाराजस्य कुण्डलीं वीक्ष्य भविष्यवाणी कृता यन्महाराजस्य ग्रहस्थितिरिदानीमरिष्टप्रदा । अतएव ग्रहशान्तिहेतवे कारावासात् समस्तवन्दीमोचनं कार्यम् । राज्ञ्येरावतीं संतोषयितुमेवात्र स्व-परिचारिका न प्रेषिता, यत इरावत्या सहानेन संकल्पः कृतो यन्मालविकां वकुलावलिकाञ्च कस्यामपि स्थित्यां न मुञ्चेत् । इदानीं यदि सा स्वपरिचारिका-मुक्ताशुभग्रह-समाचान् गृहीत्वाप्रेषयिष्यत्तदेरावत्यप्रसन्नाभविष्यत् । अत एव तया मम माध्यमेन संदेशः प्रेषितः । विश्वासायेयं नागमुद्रा समर्पिता । मम विश्वासोऽस्ति यन्ममकथने कथमपि नाशङ्का सम्भावनीया । रक्षिका नागमुद्राङ्कितमङ्गुलीयकं वीक्ष्य परं विश्वस्ता । तया च द्वे अपि कारामुक्ते कृते । एवंप्रकारेणोपायज्ञेन विदूषकेनात्मचातुर्येण मालविकया सह नायकस्य मिलनं कारितम् । महाकविकालिदासेन प्रस्तुत-नाटकस्य चतुर्थाङ्के विदूषकस्यैतस्योपायस्य परममनोरमं चित्रणं कृतम् । एतेन संदर्भेण विदूषकस्य प्रतिभायाः, कौशलस्य, कार्यक्षमतायाश्चोपरि परमप्रकाशो जायते ।

किं अवरं..............................[1] ।

विदूषकस्य व्यक्तित्वे स्वाभिमानस्यात्मसम्मानस्य च गुणो निहितोऽस्ति । स राजमित्रमवश्यमस्ति । परन्तु तस्य व्यक्तित्वे विदुष एकस्य सम्मानमपि निहितं विद्यते । अस्माकमेष तर्कः राज्ञोऽग्निमित्रस्य कथनेन सिद्धो भवति । राजा मालविकायां मुक्तायां विदूषकमालिङ्ग्य कथयति—'सखे, त्वं मयि स्निह्यसि ! अहं तव

---

१. कालिदास-ग्रन्थावली । —मालविका ३१६–३१७ ।

सत्कृपयैवेदानीं जीवितोऽस्मि। संसारस्य समस्तकार्याणि न बुद्धि-बलसापेक्षान्येव। मित्रसद्भावनाया अप्यपेक्षा भवति। कस्यापि कार्यस्योत्तरदायित्वमात्मनि गृहीत्वा तस्यान्तपर्यन्तं पालनं सन्मित्रस्य कार्यमस्ति। भवता विद्वन्मित्रसदृशेण ममकार्यं साधितम्। अतएवाहं भवतः कृतज्ञोऽस्मि। राजा स्वयमेव विदूषकस्य चाटुकारितां करोति। विदूषकोऽस्याश्चाटुकारिताया अवरोधं कुर्वन् नृपं वदति यत् मालविका वकुलावलिके द्व अपि समुद्रगृह उपविष्टे स्तः। भवान् शीघ्रं चलेत्। ते स्वानुकूले कर्त्तव्ये।

'राजा ( विदूषकं परिष्वज्य ) सखे प्रियोऽहं तव, नहि बुद्धिगुणेनैव सुहृदामर्थसाधनम्, कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते'[1]।

'विदूषक :—तुवरहु भवं समुद्दघरए सहीसहिदं मालविअं ठाविअ भवन्तं पच्चुग्गदोम्हि[2]।'

विदूषकस्य व्यक्तित्वे मातृभक्तेरंशो वर्त्तमानोऽस्ति। यदा स कृत्रिमसर्पविषवेगेन मरणाशंकां प्रकटयति तदा स स्वमित्राय नृपाय संकेत कुर्वन् कथयति यत् पुत्रशून्यायाः मम मातुः संरक्षणं मम मृत्योरुपरान्तं त्वया विधेयम्—

"विदूषकः" भवदोवाल्लादोवि पिअवअस्सोम्हि। तं विआरिअ अणुत्ताए मे जणणीए जोगक्खेमं वहेहि"[3]

अनेन संदर्भेण स्पष्टमेतद्यत् विदूषकः स्वमातुरनन्यभक्तोऽस्ति। स स्वमृत्योरनन्तरमपि स्वमातुः सुखसुविधाचिन्तां करोति, । नान्यस्य कस्यचित्।

उपर्युक्तविवेचनेन ज्ञायते यत् विदूषकस्य व्यक्तित्वे साहसस्य, सहानुभूतेः, प्रत्युत्पन्नमतित्वस्य, सतर्कतायाः, शीघ्रकार्यकारितायाः। स्मरणशीलतायाः, उपायज्ञतायाः, स्वाभिमानितायाः, नीतिज्ञतायाश्च गुणाः वर्त्तमानाः सन्ति। कालिदासस्यायं मानसपुत्रोऽन्यनाटकद्वयमानसपुत्रापेक्षया भिन्नव्यक्तित्वयुक्तोऽस्ति। उत्तरकालीनसंस्कृतनाटकेषु विदूषकस्य यद्भोजनपरायणतायाः चाटुकारितायाश्च दर्शनं भवति तस्यास्मिन्नाटकेऽभावोऽस्ति। स सन्मित्रमस्ति। स समयोचितकार्यकर्त्ता, कर्मठश्चास्ति। धारिण्या इरावत्याश्च समस्तविघ्नबाधा एकाकिनो विदूषकस्य प्रभावेण निरस्ताः जायन्ते। नायकस्य च फलप्राप्तिर्भवति।

अनुसन्धित्सु, संस्कृत-प्राकृत-विभाग,
एच० डी० जैन-कालेज, आरा
( मगधविश्वविद्यालय )

●

---

१. कालिदास ग्रन्थावली-मालविका ४।३२३
२. ,, ,, ,, ४।३२४
३. ,, ,, ,, ४।३३०

# मेघदूतस्य समस्या-पूर्त्यात्मकं पार्श्वाभ्युदयकाव्यम्

डा० नेमिचन्द्र शास्त्री



सन्देशकाव्येषु प्राचीनतमं काव्यं कालिदासस्य मेघदूतमस्ति। एतत्स्रोतसां विवेचनं कुर्वद्भिः विद्वद्भिः ऋग्वेदीयः 'सरयापणि-संवादः' प्राचीन स्रोतोरूपेण स्वीकृतोऽस्ति। वाल्मीकि-रामायणे सीतान्वेषणप्रसङ्गे हनुमतो दूतरूपेण गमनमपि काव्यस्य प्रेरणास्रोतःसु स्थानमलङ्करोति। जैनकविभिरेकं नवीनमुद्देश्यं गृहीत्वा मेघदूतानुकारीणि संदेश-काव्यानि रचितानि। शृङ्गारवातावरणे चलन्त्याः काव्यपरम्परायाः स्वप्रतिभया शान्तरसे प्रेरणमल्पीयो महत्त्वपूर्णं कार्यं नास्ति। त्यागे विश्वस्तैः जैन-लेखकैः श्रमण-संस्कृतेरुच्चतत्त्वानां विश्लेषणं पार्श्वनाथ नेमिनाथसदृशानां महापुरुषाणां जीवनचरितेष्वकारि। कियदिभः कविभिः मेघदूतश्लोकानामन्तिमपदानि गृहीत्वा समस्यापूर्तिस्वरूपाणि संदेशकाव्यानि प्रणीतानि। एवं संदेशकाव्यानां जैनकविकृतानां प्रारम्भः पार्श्वाभ्युदयादेव जायते। जैनसंदेशकाव्येषु साहित्यिकसौन्दर्येण साकं दार्शनिकसिद्धान्तोऽप्युपलभ्यते। विषयानुसारं मनश्शीलयोः दौत्ये नियुक्तिः सर्वथा नवीनः प्रयोगोऽस्ति। काव्य-भाषायां संयम-सदाचार-परमार्थ-तत्त्वानां निरूपणं सहृदयजनास्वाद्यं सञ्जातं वर्त्तते।

मेघदूतपदान्याश्रित्य प्रणीतेषु समस्यापूर्त्यात्मककाव्येषु पार्श्वाभ्युदयकाव्यं सर्वप्रथमं विद्यते। काव्येऽस्मिन् चत्वारः सर्गाः सन्ति। सर्गेषु श्लोकानां संख्याधो-निर्दिष्टास्ति—

प्रथमसर्गे—११८

द्वितीयसर्गे ११८

तृतीयसर्गे ५७

चतुर्थसर्गे ७१

काव्यभाषायां प्रौढिरस्ति। मेघदूतवदस्मिन्नपि मन्दाक्रान्ताच्छन्दो व्यवहृतमस्ति।

काव्यशैल्याः जटिलतया कथावस्तु सहसा प्रकाशं नायाति पाठकसमक्षम् । समस्या-पूर्त्तिप्रणाल्यां काव्यगुम्फनेन मूलपंक्तीनां भावेषु यत्र-तत्र विपर्यस्तता लक्ष्यते । अस्य प्रणेता जिनसेनो द्वितीयोऽस्ति ।

कवेरेतस्य जीवनवृत्तसम्बन्धे प्रामाणिकमित्तिवृत्तं नोपलभ्यते । काव्यान्तः प्रमाणेनैतत्स्पष्टं जायते यदयं वीरसेनाचार्यशिष्य आसीत् । विनयसेनोऽस्य गुरु-भ्रातासीत् । तदादेश एवैतत्काव्य-प्रणयने कारणमभूत् । काव्यस्य प्रत्येकसर्गे जिनसेनोऽमोघवर्षस्य गुरुः कथितो वर्त्तते । अमोघवर्षः राष्ट्रकूटदेशस्य राजासीत् । कर्नाटक-महाराष्ट्र-देशयोरपि तदीयशासनमासीत् । अयं शकसंवत् ७३६ काले राज्यासीनोऽभवत् । अस्य राजधानिका मान्यखेटे मलखेडे वासीत् । जिनसेनो-पदेशेनाऽयं जैनधर्मे दीक्षितोऽभवत् । प्रश्नोत्तरमालया ज्ञायते यदमोघवर्षः स्वपुत्राय राज्यं दत्वा स्वयं वनं जगाम । पार्श्वाभ्युदयस्योल्लेखो हरिवंशपुराणेऽपि वर्त्तते । पार्श्वाभ्युदयस्य रचनाकालोऽष्टमी शती वर्तते । वीरसेनाख्यां जयधवला टीकां (शकसंवत् ७०५) काले फाल्गुन-शुक्ल-दशम्याः पूर्वाह्णे समाप्तवान् । अतो जिनसेनरचनाकाल-निर्णये पार्श्वाभ्युदयानन्तरं जयधवलाटीकायास्तदनन्तरं पुराणस्य च क्रमः निश्चीयते । डा० ज्योतिप्रसादोल्लेखानुसारं वीरसेनस्वामिनः पट्टशिष्यः सेनशंकरी आचार्यजिनसेनस्वामी अमोघवर्षस्य राजगुरुः धर्म-गुरुश्चासीत् । अयं त्रिभिन्न-भाषाविज्ञो विविधविषयानां पटुः दिग्गजो विद्वानासीत् । बाल्यादेव तेन सह अमोघवर्षस्य सम्बन्धोऽभवत् । जिनसेनाचार्यस्य स्थितिकालः शकसंवत् १८०-७६५ यावत् संभाव्यते । स्वर्गीयपण्डित नाथूराम प्रेमिणा स्व विस्तृत-निबन्धे जिनसेन-गुरु-परम्परायां समयादौ च विचारितम् । प्रस्तुतकाव्यस्य टीकायां पार्श्वाभ्युदयस्य महती प्रशंसा वर्त्तते । कथावस्तु—

पोदनपुरस्यारविन्दनरेशेन बहिष्कृतः कमठः सिन्धुनदी-तटे तपश्चरति । अग्रज-निष्कासनेनदुःख्यनुजो मरुभूतिः कमठ-समीपं गच्छति । मरुभूतिं पश्यतः कमठस्य हृदये क्रोधाग्निः प्रज्वलति । स नमस्कारं कुर्वतः मरुभूतेरुपरि पाषाणशिलां पातयति, येन सः पञ्चत्वं याति । पश्चात् अनेकेषु जन्मसु कमठस्य जीवात्मा मरुभूतिजीवाय कष्टं ददाति । अन्ततोगत्वा मरुभूति-जीवो वाराणस्यां महाराज विश्वसेनस्य महाराज्ञ्याः ब्राह्मीदेव्याः पुत्रत्वं गृह्णाति । अभिनिष्क्रमणानन्तरमे-कस्मिन् दिने पार्श्वनाथस्य ( मरुभूतिजीवस्य ) उपरि शम्बरस्य ( कमठस्य ) जीवस्य दृष्टिः पतति । तस्य पूर्वकालीनो वैरभाव उद्दीप्तो जायते । स स्वमाया-प्रभावेन घोरवृष्टिमुपस्थापयति । स सिंहवद्गर्जति । तञ्च धिक्करोति । एतावतापि यदा पार्श्वनाथः साधना-विचलितो न भवति तदा कमठः तं युद्धायाह्वयते तथा युद्धे स्वहस्तमृतं तं स्वर्गलोकस्थितामलकापुरीं गन्तुमुपदिशति । शम्बरस्य (कमठस्य)

विभिन्नप्रकाराणि दुर्वचनानि श्रुत्वापि पार्श्वनाथः ( मरुभूतिः ) मौनस्तिष्ठति । शम्बरोऽस्मिन्नवसरे पार्श्वनाथं विभिन्नकथाः श्रावयति पुनर्युद्धाय चाह्वयते । युद्धे पार्श्वनाथस्य मृत्युं सम्भाव्य स्वयं मेघरूपधारणकारणात् शंवराय पार्श्वनाथायापि मेघरूपं दत्वोत्तरदिक्स्थितालकापुरीगमनाय परामर्शं ददाति ।

काव्येऽस्मिन् शंवरः ( कमठः ) यक्षरूपे कल्पितोऽस्ति । तस्य प्रेयसी भ्रातृपत्नी वसुन्धरा यक्षपत्नीरूपे कल्पिता विद्यते । राजारविन्दः कुवेररूपेण वर्णितो विद्यते, येन कमठः नगरनिर्वासनेन दण्डितः आसीत् । मेघरूपेण ( मरुभूतिः ) पार्श्वनाथः चित्रितोऽस्ति । कमठानुसारं जीवनान्ते पार्श्वनाथो मेघरूपेण स्वर्गं गमिष्यति । प्रसंगतो रामगिरेलकापुरीं यावत् मार्गं वर्णितं विद्यते । सर्वप्रथमं रामगिरेरुत्तरस्यां प्रस्थिते आम्रकूटगिरेः, तत्पश्चात् पुनरुत्तरस्यां प्रयाते नर्मदायाः, विन्ध्यवनस्य, दशार्ण देशस्य तस्याः राजधानिकायाः विदिशायाश्च वर्णनं कृतमस्ति । विदिशायां वेत्रवत्याः जलग्रहणानन्तरं कस्यामप्यट्टालिकायां दिनं यापयित्वा रात्रौ नीचैः नामके पर्वते विश्रम्य तदनन्तरं निर्विन्ध्यायाः सिन्धोश्च साम्मुख्यं कुर्वते मेघायोज्जयिनीगमनाय परामर्शं ददाति । उज्जयिन्यां जिनमन्दिरे जिनस्तुत्यनन्तरं महाकालनामकवने स्थितानां जिनालयानां दर्शनानन्तरं नगरोशोभाप्रेक्षणाय परामर्शं ददाति ।

उज्जयिन्यनन्तरं गम्भीरायाः देवगिरिपर्वतस्य चर्मण्वत्याः नद्याः दशपुर नगरस्य, सीतासरितः, ब्रह्मावर्त्तदेशस्य, कुरुक्षेत्रकनखलयोः, हिमालयक्रौञ्चरंध्रयोरलकापुर्याश्च सामीप्यं प्राप्तुमनुरोधः कृतोऽस्ति । कविरलकापुर्याः विविधभावभंगिमभिः सह श्रृंगारवर्णनं शंवरमुखेन कारितवान् । एवंप्रकारेण मेघे ( पार्श्वनाथेमरुभूतौ ) अलकापुरीं प्राप्ते तस्य पूर्वजन्मपत्न्या वसुन्धरया सह तस्य मिलनस्य वर्णनं विहितमस्ति । सन्दर्भेऽस्मिन् वसुन्धरायाः विरहावस्थायाः वर्णनं मेघदूतयक्षप्रेयसीसदृशमेव सरसं भावुकतापूर्णञ्च व्यधायि ।

शंवरेणोक्तवर्णने कृते पार्श्वनाथः ( मरुभूतिः ) शान्त एव तिष्ठति । एतस्मिन् शंवरः पुनः युद्धाय तं प्रोत्साहितं करोति । युद्धे मृते सति स्वर्गे गत्वा देवाङ्गनया सह निवासस्य प्रलोभनं ददाति । यदा पार्श्वनाथः कथमपि युद्धाय न तत्परो भवति तदा स स्वमाया-शक्त्या स्त्रीसमूहसृष्टिं कुर्वन् गानप्रारम्भं करोति तथा नारीप्रणय-चेष्टाभिः प्रियवचनैश्च तं विमुग्धं कर्तुमिच्छति । एतावत्यां शठतायां कृतायामपि पार्श्वनाथः ध्यानविचलितो न भवति तदा स पाषाणवर्षाभिस्तदन्तं चिकीर्षति । एवं घोरमुपसर्गं वीक्ष्य धरणेन्द्रः पद्मावती च तत्रागच्छतस्तदुपसर्गञ्चापनयतः । त्रस्तः शंवरः गायति । नागराजः धरणेन्द्रस्तमभयं दत्वा पलायना

द्विरामयति । इन्द्रादिदेवाः केवलज्ञानपूजायै आगच्छन्ति । शंवरोऽपि ( कमठोऽपि ) स्व-कुकृत्येभ्यः पश्चात्तापं तथा तीर्थंकरगुणगानञ्च करोति । स क्षमां याचमानः धर्मं गृह्णाति । देवाः आकाशतः पुष्पाणि वर्षन्ति, दुन्दुभिस्वनश्च जायते ।

## समालोचनम्

पार्श्वाभ्युदयकाव्यं संदेशकाव्यं वा दूतकाव्यमस्ति । जिनसेनेन समग्रमेघदूतं समस्यापूर्त्त्यावेष्ट्यैतत्काव्यं प्रणीतम् । एतस्य प्रत्येकश्लोकः मेघदूतक्रमेण श्लोक-चतुर्थांशेनार्धांशेन वा वेष्टितो वर्त्तते । समस्यापूर्त्तेरावेष्टनं प्रकारत्रयेण सम्पन्नमस्ति १. पादवेष्टनम्, २. अर्धपादवेष्टनम्, ३.अन्तरितावेष्टनम् । प्रथमपादावेष्टने मेघदूतस्य श्लोकस्य कतम एकचरणो गृहीतोऽस्ति । द्वितीयावेष्टने चरणद्वयम्, तृतीयावेष्टने तृतीयश्चरणः ।

### पादावेष्टितः श्लोकः

श्रीमन्मूर्त्या मरकतमयस्तम्भलक्ष्मीं वहन्त्या,<br>
योगैकाग्र्यस्तिमिततरया तस्थिवांसं निदध्यौ ।<br>
पार्श्वं दैत्यो नभसि विहरन् बद्धवैरेण दग्धः,<br>
कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्तः ॥

—१

### अर्धावेष्टितः श्लोकः

वक्रोऽप्यध्वा जगति स मतो यत्र लाभोऽस्त्यपूर्वो,<br>
भातुं शक्यं ननु वनपथात् कासिकाग्राज्जुनान्तात् ।<br>
वक्रः पन्थाः यदपि भवतः प्रस्थितस्योत्तराशां,<br>
सौधोत्संगप्रणयविमुखो मा स्म भूरुज्जयिन्याः ॥

—१।१०३

### एकान्तरितः श्लोकः

उत्सर्गे वा मलिनवसने सौम्य निक्षिप्य वीणां,<br>
गाढोत्कण्ठं करुणविरुतं विप्रलापायमानम् ।<br>
मद्गोत्रांकं विरचितपदं गेयमुद्गातुकामां,<br>
स्वामुद्दिश्य प्रचलदलकं मूर्च्छनां भावयन्ती ॥

—३।३८

## द्वयन्तरितः श्लोकः

तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथंचित्
स्वाङ्गुल्यग्रैः कुसुममृदुभिर्वल्लरीमस्पृशन्ती ।
ध्यायं ध्यायं त्वदुपगमनं शून्यचिन्तानुकण्ठी,
भूयोभूयः स्वयमपि कृतां मूर्छनां विस्मरन्ती ॥

—३।३९

कविजिनसेनेन मेघदूतोद्धृतांशानां प्रचलितानर्थान् स्व-स्वतंत्रकथानके प्रसज्य महद्विलक्षणतायाः परिचयो दत्तः । कविः विभिन्नप्राकृतिकदृश्यानां भावपूर्ण-रम्यस्थानानाञ्च चित्रणेऽपूर्वसहृदयतायाः परिचयं दत्तवान् । आम्रकूटपर्वतशिखरे संप्राप्ते मेघे पर्वतशोभां वर्णयता कविनोल्लेखि—

कृष्णाहिः किं वलयिततनुः मध्यमस्याधिशेते,
किं वा नीलोत्पलविरचितं शेखरं भूभृतः स्यात् ।
इत्याशङ्कां जनयति पुरा मुग्धविद्याधरीणां—
त्वय्यारूढे शिखरमचलः स्निग्धवेणीसवर्णे ॥

—१।७०

विद्याधरीणां मनसि पर्वतशिखरे स्थितान् श्यामवर्णमेघान् वीक्ष्य कृष्णसर्पाणां नीलकमलानाञ्च भ्रमो जायते ।

कविः दृश्यचित्रणे पटुरस्ति । एतद्वर्णनाधारे सुन्दररेखाचित्रं रचितमस्ति । रेवां वर्णयता कविना, रेवां पृथिव्याश्छिन्नां मालां प्रकल्प्य, तत्तटे वन्यहस्तिनां दन्तक्रीडा-स्तथाः पक्षिणां मधुविरावान् वर्णयता, नदीतटश्चित्र इवाङ्कितः ।

गत्वोदीचीं भुव इव पृथुं हारयष्टिं विभक्तां—
वन्येभानां रदनहतिभिर्भिन्नपर्यन्तवप्राम् ।
वीनां वृन्दैर्मधुरविरुतैरात्ततीरोपसेवां
रेवां प्रेक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णाम् ।१।७५।

कविः संध्याकाले महाकालवने जिनमन्दिरं प्राप्तो तत्प्राप्तेः चित्रणं कुर्वन् कथयति—"हे मेघ ! महाकालवने यदि संध्यायां त्वं जिनमन्दिरं प्राप्नुयास्तदा सांध्यपूजानन्तरं स्वेदविन्दु-वन्दिताः मन्दं मन्दं चलन्तीः स्वचरणनिक्षेपैः सह मेखला-शब्दं कुर्वन्तीः कोमलकण्ठीः गणिकाः लीला-विकीर्णैः जलकणैः सिक्ताः कुर्य्याः ।

सायाह्ने चेत्तदुपगतवान् धाम तत्कालपूजा—
संगीतान्ते श्रमजलकणैराचितांगीः सुकण्ठीः।
मन्दं यान्तीश्चतुरगणिकाः शीकरैः सन्नयेस्त्वं
पादन्यासक्वणितरसनास्तत्र लीलावधूतैः।

एतदनन्तरं कविः चित्रयन् वक्ति—'हे मेघ यदि त्वं जिनमन्दिरे दिने गमिष्यसि तदा त्वं तत्र मणियुक्तानि शब्दायमानानि नूपुराणि दधानाः सुललित पदन्यासैः गायन्तीः भ्रूविलासयुक्ताः रत्नजटितदण्डचामरैः श्रान्तहस्ताः वर्षाग्रविन्दुभिः सिक्ताः चंचला उपरि पश्यन्तीः गणिकाः द्रक्ष्यसि।'

तास्तत्राहर्मणिमयरणन्नूपुराः पण्ययोषाः,
प्रोद्गायन्तीः सुललितपदन्यासमुद्भ्रूविलासाः,
पश्योत्पश्यानवजलकणद्वित्रसिक्ता विलोला
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः।

मेघदूतस्य यक्षः प्रेमरुष्टां स्वप्रियां गौरिकवर्णे पाषाण उल्लिख्य तच्चरणयोः आत्मानमर्पयितुमिच्छन्नश्रुपातैः मलिने चित्रेऽपि संयोगं न प्राप्नोति। जिनसेनः स्वप्नसंगमाभावस्य चित्रं समुपस्थापयति! कविना विरहिण्याः दीनतायाः कृतं चित्रणं भावसौन्दर्य्यञ्च श्लाघनीयमस्ति—

तीव्रावस्थे तपति मदने पुष्पवाणैर्मृदंगं
तल्पे नाल्पं दहति च मुहुः पुष्पभेदैः प्रक्लृप्ते,
तीव्रापायत्वदुपगमनं स्वप्नमात्रेऽपि नायं
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः।

—४।३५

शंवरः (कमठं) पार्श्वनाथं क्रुद्धं विदधातुं पूर्णं प्रयासं करोति। सोऽपशब्दान् व्यवहरति तथापि पार्श्वनाथः ध्यानेऽचलस्तिष्ठति। कविः जिनसेनः द्वितीय-तृतीय पंक्त्योः समस्यापूर्त्तिं कुर्वन् कथयति—

भो भो भिक्षो मयि सहरुषि क्व प्रयास्यस्यवश्यं—
त्वामुद्धेति प्रणिपतनकैः सारयिष्ये तदग्रम्।
न प्राणान् स्वान् घटयितुमलं तावको निर्भयो वा,
मुक्ताजालं चिरपरिचितं त्याजितो दैवगत्या।

—४।२

भो भिक्षो, मयि क्रुद्धे त्वं क्व गमिष्यसि ? अहं त्वां स्वासिलक्ष्यमवश्यं सम्पादयिष्यामि। चिरात् दैववशादभ्यस्तमौक्तिकभूषणानां त्यागनिर्णयोऽपि तव प्राणान्न रक्षिष्यति।

किं ते वैरिद्विरदन-घटा-कुम्भ-सम्भेदनेषु
प्राप्तस्थेमा समरविजयी धीरलक्ष्म्याः करोऽयम्।
नास्मत्खड्गः श्रुतिपथमगात् रक्तपानोत्सवानाम्,
सम्भोगान्ते मम समुचितो हस्तसंवाहनानाम्।

भो भिक्षो ! वैरिहस्तिकुम्भस्थलविदारणाभ्यस्तो रणविजयी युद्धकार्योपरान्तं (सम्भोगान्ते) ममहस्तसंवहनयोग्यः वीरलक्ष्म्याः बाहुस्वरूपः अयं मम खड्गः किं त्वया न श्रुतः

एवं समस्यापूर्त्यामपि कविना नवीनभावयोजना कृता। अनावश्यकवर्णनाधिक्य-भारैः कथानके शैथिल्यमायातमस्ति। मार्गवर्णनं वसुन्धरायाः विरहावस्थावर्णनञ्चात्र मेघदूतसमानमेवास्ति। परन्तु संदेशकथनं मेघदूतवन्नास्ति। शंवरः (कमठः) पार्श्वनाथस्य (मरुभूतेः) धैर्य्येण, सौजन्येन, सहिष्णुतया च प्रभावितः वैरभावं परित्यज्य तच्छरणमुपैति तथा स्वापराधेभ्यः पश्चात्तापपूर्वकं क्षमाप्रार्थनां करोति।

प्रस्तुतकाव्ये जैनधर्मस्य क्वापि कोऽपि सिद्धान्तः प्रतिपादितो नास्ति। कैलाश-पर्वते महाकालवने च जिनमन्दिराणां महत्प्रतिमानाञ्च निर्देशोऽवश्यमेवकृतोऽस्ति। कविना यत्र तत्र सुन्दर-सूक्तीनां योजनां विधाय रमणीयतोत्पादनाय प्रयासः कृतोऽस्ति "रम्यस्थानं त्यजति न मनोर्दुर्विधानं प्रतीहि" "पापापाये प्रथममुदितं कारणं भक्तिरेव"

नात्र संदेहो यत्समस्यापूर्त्तिदृष्ट्या काव्यमेतदद्वितीयमस्ति। कविना कालिदासस्य मूलभावाः सुन्दररीत्या पल्लविताः सन्ति। क्वचित् कालिदास-भावानां प्रसंगान्तरे कलापूर्णसूक्ष्मतया सन्निवेशप्रयासः सुन्दरः प्रतीयते। प्रकृतिचित्रणे कविना भावुकतायाः कल्पनाशक्तेश्च पूर्णपरिचयो दत्तः। यद्यपि काव्येऽस्मिन् न कालिदासलालित्यमायातं तथाप्येतत्काव्यं संस्कृतकाव्येषु स्ववैशिष्ट्यमावहति।

## मेघदूतस्य पाठान्तरम्

एतदतिरोहितं यत् महाकविजिनसेनस्यास्मिन् प्रबन्धकाव्ये मेघदूतस्य समस्तानिपद्यानि समाविष्टानि। अनेन ग्रन्थेन मेघदूतस्य पाठ-संशोधनेऽपि प्रकाश आपतति।

जिनसेनानुसारं पूर्वमेघे पञ्चोत्तराणि षष्टि पद्यानि, उत्तरमेघे च द्व्युत्तराणि पञ्चाशत् पद्यानि संभावितानि । पूर्वमेघ एकत्रिंशत्तमपद्यानन्तरं पद्यद्वयं प्रक्षिप्तं मन्यते; परन्तु पार्श्वाभ्युदये एतत्पद्ययोरपि पादान् गृहीत्वा समस्यापूर्तिः कृता विद्यते । अतः सिद्ध्यति यज्जिनसेन-समये (ख्रीष्टाब्दद्याः अष्टमोशती) एतत्पद्य-द्वयं मूलग्रन्थस्यैवाङ्गभूतमासीत् । एतद्रचयितापि कालिदासोऽमन्यत । अतएव पार्श्वाभ्युदय-प्रकाश एतत्पद्यद्वयस्यापि गणना मूल-पद्यरूपेणापेक्षिता । पद्यानां समस्यापूर्त्तिरधस्तत्ना विद्यते—

तीक्ष्णस्यारेस्स किल कलहे युद्धशौण्डो मुरुण्डः,
प्रद्योतस्य प्रियदुहितरं वत्सराजोऽत्र जह्ने ।
हैमं तालद्रुमवनमभूत्तत्र तस्यैव राज्ञः,
हासालापैरिति रमयति स्त्रीजनो यत्र बालान्

—१।११३

शैलं शैलप्रतिमवपुषा पीडयन्नुन्मदिष्णू
न्निघ्नन्व्यालान् कुपितसमवर्त्तीव मेघं मरुद्वत्,
अत्रोद्भ्रान्तः किल नलगिरिस्तम्भमुत्पाट्य दर्पात्,
इत्यागन्तून्रमयति जनो यत्र बन्धूनभिज्ञः ।

—१।११४

यस्यां विभ्रत्यवनिपपथा रत्नराशीनुदग्रान्,
शूर्पोन्मेयाञ्जलधय इवापीततोया युगान्ते,
हारांस्तारांस्तरलघुटिकान् कोटिशः शङ्खशुक्तीः,
शष्पश्यामान् मरकतमणीनुन्मयूखप्ररोहान् ।

—१।११५

भूयो नानाभरण-रचना-योग्यरत्नप्रवेकान्
ज्योतिर्लेखारचितरुचिमच्छक्र-चापानुकारान्
दृष्ट्वा यस्यां विपणिरचितान् विद्रुमाणाञ्च भङ्गान्
संलक्ष्यन्ते सलिलनिधयस्तोयमात्रावशेषाः ।

—१।११६

उत्तरमेघे कतिपयपद्यानां पाठेषु भेदोऽस्ति । एकस्ये दृशस्यापि श्लोकस्य पादपूर्त्तिरुपलभ्यते, य उत्तरमेघे नास्ति । प्रसंगावलोकनेन तत्पद्यं मेघदूतस्यांगभूतं प्रतिभाति । न जाने कथं तत्पद्यं बहिष्कृतम् । एतस्य पादपूर्त्तिरुत्तरमेघस्य दशमैकादशश्लोकयोः मध्ये कृता विद्यते । पार्श्वाभ्युदयानुसारमुत्तरमेघस्य पद्यानु-

क्रमेऽपि व्यतिक्रमो दृश्यते। काव्येऽस्मिन् एकादशपद्यस्य पादपूर्त्तेरनन्तरं नवीन-पद्यमायाति। ततो दशमपद्यस्य पादपूर्त्तिः प्राप्यते। पद्यञ्च निम्नप्रकारमस्ति—

मन्दाक्रान्तादिगिभविभुभिः स्पर्धमाना इवोच्चैः,
शैलोदग्रास्त्वमिव करिणो वृष्टिमन्तः प्रभेदात्।
योधाग्रण्यः प्रतिदशमुखं संयुगे तस्थिवासः,
प्रत्यादिष्टाभरणरुचयश्चन्द्रहासव्रणाङ्कैः॥

उत्तरमेघस्य द्वादशे पद्ये त्रयोदेशे च पद्ये पर्याप्तः पाठभेदो लक्ष्यते। अत्र तुलनार्थं पद्यद्वयमप्युद्ध्रियते।

तत्रागारं धनपतिगृहादुत्तरेणास्मदीयं,
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन।
यस्योपान्ते कृतकतनयः कान्तया वर्धितो मे,
हस्तप्राप्यस्तवकनमितो बालमन्दारवृक्षः॥

—उत्तरमेघ १२

पार्श्वाभ्युदये च निम्नांकितः पाठ उपलभ्यते—

तत्रागारे धनपति-गृहादुत्तरेणास्मदीयं
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन।
यस्योद्याने कृतकतनयो वर्द्धितः कान्तया मे
हस्तप्राप्यस्तवकनमितो बालमन्दारवृक्षः॥

—पार्श्वाभ्युदयः ३।१२–१४

उत्तरमेघस्य त्रयोदेशे श्लोके 'हैमैश्छन्ना'—स्थाने पार्श्वाभ्युदये 'हैमैःस्फीता तथा 'स्निग्धवैडूर्य्यनालैः' इत्यस्य स्थाने 'दीर्घवैडूर्य्यनालैः' ( पार्श्वा० ३।१४ ); पाठौ प्राप्येते। षोडशे पद्ये 'नर्त्तितः कान्तया मे' ( उत्तर मेघ १६ ) स्थाने 'कान्तया नर्त्तितो मे' ( पार्श्वा० ३।३१ ) 'देहलीदत्तपुष्पैः' ( उत्तरमेघ २४ )–स्थाने 'देहलीमुक्तपुष्पैः' ( पार्श्वा० ३।४० ); 'मत्सङ्गं वा' ( उत्तरमेघ २४ ) स्थाने 'सम्भोगं वा' (पार्श्वा० ३।४१) 'पीडयेन्मद्वियोगः' ( उत्तरमेघ १४ ) स्थाने 'पीडयेद्विप्रयोगः' ( पार्श्वा० ३।४३ ) 'सौध-वातायनस्थः' ( उत्तरमेघ ०५ ) स्थाने 'सद्मवातायनस्थः' ( पार्श्वा० ३।४३ ) 'पेशलम्' ( उ०मे० ३० ) स्थाने 'पेलवम्' ( पा० ३।५२ ) 'तामुत्थाप्य' ( उ०मे० ३५ ) स्थाने प्रोत्थाप्यैनां ( पा० ४।९ ) स्तनितवचनैः ( उ०मे० ०५ ) स्थाने स्तनितवचनः ( पा० ४।१२ ) 'प्रियमविधवे' ( उ०मे० ३६ ) स्थाने 'प्रियमभिदधे' ( पा० ४।१३ ) ब्रूया एवम् ( उ०मे० ३८ )

स्थाने ब्रूयादेवम् ( पा० ४।२२ ) 'पूर्वाभाष्यम्' ( उ०मे० ३८ ) स्थाने पूर्वाशास्यम्' ( पा६ ४।२४ । प्रेक्षणे ( उ०मे० ४१ ) स्थाने प्रेक्षिते ( ४।२६ ) 'शेषान्मासान् (उ०मे० ४७ ) स्थाने 'मासानन्यान्' ( पा० ४।४७ ) विरहगणितम् (उ०मे० ४७) स्थाने 'विरहगुणितम् ( ४।४८ ) 'तमात्माभिलाषम्' ( उ०मे० ४७ ) स्थाने 'तमेवाभिलाषम्' ( पा० ४।४८ ) 'सस्वनम्' ( उ०मे६ ४८ ) स्थाने 'सस्वरम्' ( पा० ४।४९ ) ध्वंसिनस्तेत्वभोगात् ( उ०मे० ४६ ) स्थाने ह्रासिनस्तेऽप्ययोगात् (पा० ४।५३) 'आश्वास्यैवम्' (उ०मे० ५०) स्थाने आश्वास्यैनाम् (पा० ४।४४) प्रथमविरहोदग्रशोकाम् (उ०ने० ५०) स्थाने 'प्रथमविरहेशोकदष्टाम्' (पा० ४।५४) शैलादाशु (उ०मे०५०) स्थाने 'तस्मादद्रिः' (पा० ४।५५) 'साभिज्ञानप्रहितकुशलै-स्तद्वचोभिर्ममापि' ( उ०मे० ५० ) स्थाने साभिज्ञान-प्रहित-वचनैस्तत्रयुक्तैर्ममापि ( पा० ४।५६ )।'धारयेथाः' ( उ०मे० ५० ) स्थाने 'धारयेदम्' ( पा० ४।५७ ) प्रार्थनावर्त्तिनः'(उ० मे० ५२) स्थाने 'प्रार्थनादात्मनो' (पा० ४।६२ ) एवं 'च ते' ( उ० मे०५५ ) स्थाने 'सखे' ( पा० ४।६५ ) पाठाः उपलभ्यन्ते' ।

समस्यापूर्त्ति कुर्वता कविजिनसेनेनोत्तरमेघस्थ-पद्यानां क्रमः निम्नप्रकारेण स्थापितः—

१, ७, ९, ६, २, ३, ५, ६, ४, ८, ११, १०, १२, १३, १४, १९, २०, २१, १५, १६, १७, १८, २२, २३, २४, २५, २६, २८, २९, २७, ३०, ३१, ३२, ३३, ३४, ३५, ३६, ३७, ३८, ३९, ४०, ४१, ४२, ४३, ४५, ४६, ४७, ४८, ४९, ५०, ५१ ।

उत्तरमेघे प्रक्षिप्तेषु पद्येषु निम्नलिखितपद्यानां पूर्त्तयः पाश्र्वाभ्युदये प्राप्यन्ते ।

मन्ये यस्या जगति सकलेऽप्यस्ति नौपम्यमन्य—
त्सर्वौपम्यप्रणिहितधिया वेधसा निर्मितायाः,
यामध्यास्ते कमलनिलया सम्पदश्च प्रजाना—
मानन्दोत्थं नयनसलिलं यत्र नान्यैर्निमित्तैः ।

— पा० २।९७

यत्रत्यानां न परपरता चित्तभर्तुः परत्र,
नान्योभङ्गः प्रणयिनिजने मानभङ्गं विहाय
नान्यो बन्धः प्रियजनतया सङ्गमाशानुबन्धा—
न्नान्यस्तापः कुसुमशरजादिष्टसंयोगसाध्यात् ।

—२।९८

यत्राकल्पान्निधिषु सकलानेन सम्पादयत्सुं,
नार्थो कश्चिन्न खलु कृपणो वापि निःस्वो जनोऽस्ति ।
धर्मः साक्षान्निवसति सतीं यामलङ्कृत्य यस्मा—
न्नाप्यन्यत्र प्रणयकलहाद्विप्रयोगोपपत्तिः ।

—२।९९

यस्यै शक्रः स्पृहयतितरामिद्धसर्वर्द्धिभाजे,
यत्रासीनाः शतमुखपुरीं विस्मरन्त्येव सद्यः
नान्यच्चिन्त्यं विहरणमयाद्यत्र मृत्युञ्जयानां—
वित्तेशानां न खलु च वयो यौवनादन्यदस्ति ।

—२।१८०

एतत्पद्यानामग्रे "यत्रोन्मत्तभ्रमरनिकराः पादपा नित्यपुष्पाः" इत्यादिपद्यानां पादपूर्त्तयः प्राप्यन्ते । सिद्धमेतद्यत् खीष्टाब्देरष्टमीं शतीं यावत्" आनन्दोत्थम् तथा "यत्रोन्मत्तभ्रमरनिकराः" पद्ये प्रक्षिप्ते न मन्येते स्म । यदि महाकविजिनसेनमते प्रस्तुतपद्ययोः गणना प्रक्षिप्तपद्येषु नाभविष्यत् तदा तयोः समस्यापूर्त्ति नाकरिष्यत् ।

एवं प्रकारेण पार्श्वाभ्युदयकाव्यं मेघदूतस्य पाठशोधनदृष्ट्या परमोपयोगि, महत्त्वपूर्णञ्चास्ति । कविः पादपूर्तिषु विभिन्नकाव्यचमत्कारमुपस्थापितवान् । स हि मेघदूतस्य समस्तपद्यानि स्वकीयकाव्ये समावेश्य मेघदूतस्य प्राचीनपरम्पराया संरक्षणं कृतवानिति निर्विवादम् ।

अध्यक्ष, संस्कृत-प्राकृत-विभाग
एच० डी० जैन कॉलेज, आरा,
( मगधविश्वविद्यालय )

•

स्थाने ब्रूयादेवम् ( पा० ४।२२ ) 'पूर्वाभाष्यम्' ( उ०मे० ३८ ) स्थाने पूर्वाशास्यम्' ( पा९ ४।२४ । प्रेक्षणे ( उ०मे० ४१ ) स्थाने प्रेक्षिते ( ४।२९ ) 'शेषान्मासान् ( उ०मे० ४७ ) स्थाने 'मासानन्यान्' ( पा० ४।४७ ) विरहगणितम् (उ०मे० ४७) स्थाने 'विरहगुणितम् ( ४।४८ ) 'तमात्माभिलाषम्' ( उ०मे० ४७ ) स्थाने 'तमेवाभिलाषम्' ( पा० ४।४८ ) 'सस्वनम्' ( उ०मे९ ४८ ) स्थाने 'सस्वरम्' ( पा० ४।४९ ) ध्वंसिनस्तेत्वभोगात् ( उ०मे० ४९ ) स्थाने ह्रासिनस्तेऽप्ययोगात् (पा० ४।५३) 'आश्वास्यैवम्' (उ०मे० ५०) स्थाने आश्वास्यैनाम् (पा० ४।४४) प्रथमविरहोदग्रशोकाम् (उ०ने० ५०) स्थाने 'प्रथमविरहेशोकदष्टाम्' (पा० ४।५४) शैलादाशु (उ०मे०५०) स्थाने 'तस्मादद्रिः' (पा० ४।५५) 'साभिज्ञानप्रहितकुशलै-स्तद्वचोभिर्ममापि' ( उ०मे० ५० ) स्थाने साभिज्ञान-प्रहित-वचनैस्तत्रयुक्तैर्ममापि ( पा० ४।५६ )।'धारयेथाः' ( उ०मे० ५० ) स्थाने 'धारयेदम्' ( पा० ४।५७ ) प्रार्थनावर्त्तिनः'(उ० मे० ५२) स्थाने 'प्रार्थनादात्मनो' (पा० ४।६२ ) एवं 'च ते' ( उ० मे०५५ ) स्थाने 'सखे' ( पा० ४।६५ ) पाठाः उपलभ्यन्ते' ।

समस्यापूर्त्ति कुर्वता कविजिनसेनेनोत्तरमेघस्थ-पद्यानां क्रमः निम्नप्रकारेण स्थापितः—

१, ७, ९, ६, २, ३, ५, ६, ४, ८, ११, १०, १२, १३, १४, १९, २०, २१, १५, १६, १७, १८, २२, २३, २४, २५, २६, २८, २९, २७, ३०, ३१, ३२, ३३, ३४, ३५, ३६, ३७, ३८, ३९, ४०, ४१, ४२, ४३, ४५, ४६, ४७, ४८, ४९, ५०, ५१ ।

उत्तरमेघे प्रक्षिप्तेषु पद्येषु निम्नलिखितपद्यानां पूर्त्तयः पार्श्वाभ्युदये प्राप्यन्ते ।

मन्ये यस्या जगति सकलेऽप्यस्ति नौपम्यमन्य—
त्सर्वौपम्यप्रणिहितधिया वेधसा निर्मितायाः,
यामध्यास्ते कमलनिलया सम्पदश्च प्रजाना—
मानन्दोत्थं नयनसलिलं यत्र नान्यैर्निमित्तैः ।

— पा० २।९७

यत्रत्यानां न परपरता चित्तभर्तुः परत्र,
नान्योभङ्गः प्रणयिनिजने मानभङ्गं विहाय
नान्यो बन्धः प्रियजनतया सङ्गमाशानुबन्धा—
न्नान्यस्तापः कुसुमशरजादिष्टसंयोगसाध्यात् ।

—२।९८

यत्राकल्पान्निधिषु सकलानेन सम्पादयत्सु,
नार्थो कश्चिन्न खलु कृपणो वापि निःस्वो जनोऽस्ति ।
धर्मः साक्षान्निवसति सतीं यामलङ्कृत्य यस्मा—
न्नाप्यन्यत्र प्रणयकलहाद्विप्रयोगोपपत्तिः ।

—२।९९

यस्यै शक्रः स्पृहयतितरामिष्ठसर्वर्द्धिभाजे,
यत्रासीनाः शतमुखपुरीं विस्मरन्त्येव सद्यः
नान्यच्चिन्त्यं विहरणमयाद्यत्र मृत्युञ्जयानां—
वित्तेशानां न खलु च वयो यौवनादन्यदस्ति ।

—२।१८०

एतत्पद्यानामग्रे "यत्रोन्मत्तभ्रमरनिकराः पादपा नित्यपुष्पाः" इत्यादिपद्यानां पादपूर्त्तयः प्राप्यन्ते । सिद्धमेतद्यत् खीष्टाब्देरष्टमीं शतीं यावत्" आनन्दोत्थम् तथा "यत्रोन्मत्तभ्रमरनिकराः" पद्ये प्रक्षिप्ते न मन्येते स्म । यदि महाकविजिनसेनमते प्रस्तुतपद्ययोः गणना प्रक्षिप्तपद्येषु नाभविष्यत् तदा तयोः समस्यापूर्त्तिं नाकरिष्यत् ।

एवं प्रकारेण पार्श्वाभ्युदयकाव्यं मेघदूतस्य पाठशोधनदृष्ट्या परमोपयोगि, महत्त्वपूर्णञ्चास्ति । कविः पादपूर्तिषु विभिन्नकाव्यचमत्कारमुपस्थापितवान् । स हि मेघदूतस्य समस्तपद्यानि स्वकीयकाव्ये समावेश्य मेघदूतस्य प्राचीनपरम्पराया संरक्षणं कृतवानिति निर्विवादम् ।

अध्यक्ष, संस्कृत-प्राकृत-विभाग
एच० डी० जैन कॉलेज, आरा,
( मगधविश्वविद्यालय )

# रघुवंशे राजधर्मः

प्राध्यापक शमशेर जंगबहादुरः

प्राचीन भारतीयराजनैतिक-संघटने राजतन्त्रस्यैव प्रधानतासीत्। विश्वस्यान्य-देशेष्वपि दीर्घकालं यावत्, राजतन्त्रस्य प्राबल्यमासीत्। यद्यपि प्राचीन यूनाने, ख्रीष्टाब्देः पूर्वं षष्ठ्यां शताब्द्याञ्च भारतेऽपि गणतन्त्र-व्यवस्था दृश्यते, तथापि मानवसभ्यतायाः प्राचीनेतिहासो राजतन्त्रस्य प्रकाशेनैवोद्भासितः। आधुनिक जनतन्त्रीय-सिद्धान्तस्येतिहासस्तु केवलं द्वयोश्शताब्द्योरेवास्ति। इदानीमपि प्रयोगावस्थायामेवायं वर्त्तते। नेदं निश्चयात्मकरूपेण कथनीयमस्ति यज्जनतन्त्रीय-शासक-प्रणाली मानवसमाजस्य राजकीयलक्ष्याणां पूर्णरूपेण सिद्धिं करिष्यति। आधुनिकजनतन्त्राणां दोषोपरि यदा ध्यानं याति तदा प्रतीयते यन्नेयं प्रणाली सर्वथा कल्याणकारिणी वर्त्तते।

अन्यत्र राजतन्त्राणामितिहासोपरि दृष्टिपातेन ज्ञायते यदियं शासकीयप्रणाली मानवसमाजाय पूर्णकल्याणप्रदा वर्त्तते। न केवलं भारतस्यैवापित्वन्यदेशानामप्ये-तादृशविवेकशीलानां सम्राजामुदाहरणानि लभ्यन्ते येषां शासनकाले मनुष्यो न केवलं भौतिकक्षेत्रे, प्रत्युत बौद्धिके नैतिके च क्षेत्रे पर्याप्तं विकासं प्राप्तवान्। राजतन्त्राणामितिहासोमानवसभ्यतायाः संस्कृतेश्च विराडितिहासोऽस्ति।

शासनव्यवस्थात्मनि साध्यस्वरूपा नास्ति। सा तु साधनमात्रास्ति। साध्यस्तु मानवसमाजस्यास्ति भौतिकः, बौद्धिकस्तथा नैतिकोऽभ्युदयः। एतस्यैव लक्ष्यस्य सिद्धि-हेतवे मनीषिभिः गहनं चिन्तनं कृतन्तथा शासक-तन्त्रैरविश्रामप्रयत्नो व्यधायि। स्यान्नाम 'प्लेटो' 'अरस्तू' वा, अथवा याज्ञवल्क्यः, मनुपराशरौ वा, सर्वैरेवोक्तदिशि स्वादर्शनिर्माण-प्रयत्नः कृतः।

महाकविकालिदासः सम्राड्विक्रमादित्यकाले बभूव। स न केवलं महाकवि-रेवासीत्, प्रत्युत महान् विचारकोऽप्यासीत्। परन्तु तद्विचाराणां गङ्गा काव्यरूपे प्रवाहिता। जीवनस्यान्यक्षेत्रीयनैतिकसामाजिक-सांस्कृतिक-विचारैः सह महा-कविना राजकीयसंघटनस्य दिशायामप्यतिद्युतिपूर्णादर्शो निरूपितः।

एष आदर्शो विवेकपूर्णराजतन्त्रस्य ( Enlightned desportism ) अस्ति। यस्तात्त्विकविवेचनाधारे प्रतिष्ठितो मानवसमाजाय कल्याणकारी वर्त्तते। राजतन्त्रं तादृशं राजनैतिकव्यवस्थास्वरूपं शासनप्रणालीरूपञ्चास्ति, यस्मिन् राज्ञस्सम्राजो वा पदं केन्द्रीयमस्ति। जनता तस्यैवच्छत्रच्छायायां कल्याणं प्राप्नोति। राजतन्त्रीयदर्शनाधारो मानवस्वभावस्य त्रिगुणीय-विभाजन-स्वरूप एवास्ति। जनसाधारणस्य मानसिकविकासस्तत्स्तरीयो न भवति, यत्र सामाजिककल्याणस्य लक्ष्यं स्पष्टं दृष्टिगतं स्यात्। जनकल्याणसाधनहेतवे न केवल-भागीरथ-भौतिक-प्रयत्नस्यावश्यकता वर्त्तते, प्रत्युत तत्त्वदर्शनस्य क्षमताप्यपेक्षितास्ति। एतादृशी बहुमुखी क्षमता कर्मयोगिनि सम्राज्येव संभवा विद्यते। यद्यपि सम्राट् स्वसम्पूर्णशासनयंत्रस्य, ( मंत्रिगणस्य, सेनायाः, न्यायाधीशस्य ) प्रयोगमपि साधनरूपेण करोति। राजतन्त्रे जनतायाः स्थानं गौणमस्ति, परन्तु तस्याः हितं सर्वप्रधानमस्ति। राजा सम्पूर्णशासकीयनिर्णयाणां सम्पादने वैयक्तिकाधिकारपूर्णो भवति। परन्त्वेतदधिकारस्याधारो जनकल्याणमेव भवति। एवंप्रकारेण राजा सर्वथानुत्तरदायी न भवति। तस्योद्बुद्धं नैतिकस्वत्वं तं जनकल्याणं प्रति सततं सतर्कं रक्षति।

एतादृशविवेकशीलराजतन्त्रस्यादर्शस्वरूपं 'रघुवंशे' प्राप्यते। राज्ञा समर्थेन तेजस्विना च भाव्यम्। तेन शारीरिकबलेन शौर्येण च सह बुद्धि-विवेकपूर्णेणापि भाव्यम्। राज्ञो दिलीपस्य जन्मविषये महाकविर्लिखति—

तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः,
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥

—रघुवंशम् १।१२

अत्यन्तशुद्धचरित्रवता राज्ञा दिलीपेन जन्म गृहीतम्। शारीरिक-सौन्दर्येण पूर्णस्य राज्ञो रूपस्य पुनर्वर्णनमस्ति—

व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः,
आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः।

—रघु० १।१३

सुन्दरशरीरेण सह राजा तीक्ष्णबुद्धिरासीत्। 'आकारसदृशप्रज्ञः प्रज्ञया सदृशागम इत्यादिः। शासन-कुशलतायाः वर्णनं महाकविशब्देषु दृश्यताम्—

रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम्,
न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः।

—रघु० १।१७

प्रजासु करव्यवस्था तदीयकल्याणसाधनायासीत्, राज्ञो विलासाय नासीत्। दिलीपस्य करारोपणस्य मन्तव्यं द्रष्टव्यम्—

प्रजानामेव भूत्यर्थं स ताभ्यो वलिमग्रहीत्,
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः।

—रघुवंशम् १।१८

एवमेव वयं प्राप्नुमो यद् राज्ञो दिलीपस्यैका महती सेनासीत्। किन्तु तस्याः प्रयोगः प्रायोनाभवत्। राजा स्वशत्रूणां पराजये सर्वथा समर्थ आसीत्। परन्तु शत्रुभ्यस्स क्षमादानमप्यकरोत्। एतादृशो विशालहृदयता कस्यापि शासकस्य कृते आदर्शस्वरूपास्ति। राजा दिलीपो नीतिकुशलोऽप्यासीत्। राजनीतौ मौनताप्येका कलास्ति। अनुभवी राजनीतिज्ञो नाधिकं वदति। तन्मनोभेदज्ञानं कठिनमस्ति। राज्ञि दिलीपेऽपि गुण एष आसीत्। दृश्यताम्—'तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च' शासनकुशलोऽतिसमृद्धोऽपि सन् राजा विलासी नासीत्—'अनाकृष्टस्य विषयै-र्विद्यानां पारदृश्वनः।' (रघुवंशम् १।२०) प्रजाः कुमार्गगामिनीस्स नाकरोत्। प्रजाभिस्तस्य पितृपुत्रसम्बन्ध आसीत्—

'प्रजानां विनयाधानाद्रक्षणाद्भरणादपि,
स पिता पितरस्तेषां केवलं जन्महेतवः।

—रघु० १।२४

सत्यपि न्यायशासने कतिचनजनास्समाज एतादृशा भवन्ति, येऽपराधं कुर्वन्त्येव। तेषां कृते दण्डव्यवस्थाप्यासीत्। विधि-व्यवस्था स्थापितासीत्। तस्करताशब्दः केवलं श्रवणायैवासीत्—

'श्रुतौ तस्करता स्थिता।'

—रघु० १।२७

राजा रघुरपि पितृ-सदृश एव यशस्व्यासीत्। स महान् वलवान् विनम्रश्चासीत्।

"कपाटवक्षाः परिणद्धकंधरः,
तथापि नीचैर्विनयाददृश्यत"

—रघु० ४।३४

परन्तु शत्रुसमक्षं सोऽतिदुर्धर्ष आसीत्। यज्ञाश्वे मघवता गृहीते रघुणा स आहूतः—

गृहाण शस्त्रं यदि सर्ग एष ते
न खल्वनिर्जित्य रघुं कृती भवान् ।

—रघु० ३।५१

एषाख्यास्ति शौर्यस्य पौरुषस्य च ।

आधुनिकजनतन्त्रैरपि सफलतायै स्वविदेशनीतीनामेष एव सिद्धान्त आधाररूपेण स्वीकरणीयो भविष्यति ।

महाकविकालिदासेन राजभ्यो दिग्विजयाभियानस्यापि महत्ता प्रदर्शिता । एतादृशाभियानलक्ष्यं शान्ते र्न्यायस्य च स्थापनमासीत्, नग्नसाम्राज्यवादो नहि । एतादृश्यभियाने रघुप्रतापोऽग्रे चलति स्म, सैन्यं पश्चात्—

"प्रतापोऽग्रे ततश्चमूः"

—रघु० ४।८६

दिग्विजयानन्तरं रघुर्विश्वजिन्नामकं यज्ञं कृतवान्, यस्मिन्नसौ स्वाशेषसम्पदं दक्षिणायां दत्तवान् ।

"स विश्वजितमाजह्रे यज्ञं सर्वस्वदक्षिणम्,
आदानं हि विसर्गाय सतां वारिमुचामिव ।

—रघु० ४।८६

यथा मेघाः पृथ्व्याः जलमादाय पुनः पृथ्व्यामेव वर्षन्ति तथा महात्मानोऽपि दानायैव धनमेकत्र कुर्वन्ति । एष आसीद्राजसम्मुखे त्यागादर्शः ।

अन्ते भगवतो रामस्य विषये महाकविकालिदासेन य आदर्शः प्रतिष्ठापितः, स विचारणीयोऽस्ति । महाराज्ञ्या कौशल्यया तमोगुणनाशकः पुत्र उदपादि—

अथाग्र्यमहिषी राज्ञः प्रसूतिसमये सती,
पुत्रं तमोपहं लेभे नक्तं ज्योतिरिवौषधिः ।

—रघु० १०।६६

कुशलशासको रामस्तमोगुणविनाशक आसीत् । अर्थात्समाजस्य सर्वविध-कलुष-विनाशक आसीत् । मानवसम्मुखे कदाचिद्विकटं मानसिक-द्वन्द्वमुपस्थितं भवति किं कर्त्तव्यं किमकर्त्तव्यमिति । एतादृशएव प्रसङ्गो महाराजदशरथसम-क्षमुपस्थितस्तदा, यदा महर्षिविश्वामित्रो राममसुरसंहाराय नेतुमिच्छितवान् । किन्तु रघुकुलरीतिससमक्षमासात् । महाराजो राजकुमारौ रामलक्ष्मणौ दत्तवान् ।

"कृच्छ्रलब्धमपि लब्धवर्णभाक्तं दिदेश मुनये सलक्ष्मणम्,
अप्यसुप्रणयिनो रघोः कुले न व्यहन्यत कदाचिदर्थिता।

—रघु० ११।२

जनकल्याणार्थं स्वप्रियजन-त्यागस्याप्यादर्शो महाकविना समुपस्थापितः।

महाराजो रामचन्द्रो युद्धे रावणं जघान। समाज एकाततायिमुक्तो जातः। युद्ध-प्राङ्गणे स्वकर्त्तव्यपूर्त्यनन्तरं रामो धनुषो ज्यामवतारितवान्। यतस्तेन देवकार्याणि सम्पादितानि। बलप्रयोगस्यापि सीमासीत्।

जनमतस्य महत्त्वं दर्शयता महाकविना रामजीवनस्यैकः परममार्मिकः प्रसङ्गः समुपस्थापितः। अयोध्यां परावर्त्य स्वनगरशोभां पश्यता रामचन्द्रेण भद्रनायकस्स्वदूतः पृष्टो यद्भद्र! कथयास्माकं विषये प्रजा किं कथयति। अनेकवार-पृष्टेन भद्रेण कथितम्—

निर्बन्धपृष्टः स जगाद सर्वं स्तुवन्ति पौराश्चरितं त्वदीयम्,
अन्यत्र रक्षोभवनोषितायाः परिग्रहान्मानवदेव देव्याः।

—रघु० १४।३२

भवता रक्षोगृहनिवासिनी सीता पुनर्गृहीता। तदेवग्रहणं जनास्समीचीनं नावगच्छन्ति। एतच्छ्रुत्वा रामचन्द्रस्य हृदये भयानकं द्वन्द्वमुपस्थितम्। "दोलाचल-चित्त वृत्तिः" वार्त्ताश्रुता क्रियेताथवा निर्दोषा पत्नी निर्वासिता क्रियेत। अन्ते जनमतं समर्थयन् रामो देवीं सीतां त्यक्तुमेव निर्णीतवान्। जनताविश्वासाय राज्ञा कियान् त्यागोऽपेक्षित इत्येतस्य सीमा महाकविकालिदासेन निर्धारिता। कर्त्तव्यसमक्षं 'स्वं' सदा विस्मरेत्।

कुशपुत्रस्य राज्ञोऽतिथेर्विषये लिखन् महाकविः कथितवान्—

प्रजास्तद्गुरुणा नद्यो नभसेव विवर्द्धिताः,
तस्मिँस्तु भूयसीं वृद्धिं नभस्येता इवाययुः।

—१७।४१

यदुवाच न तन्मिथ्या यद्ददौ न जहार तत्,
सोऽभूद्भग्नव्रतः शत्रूनुद्धृत्य प्रतिरोपयन्।

—१७।४२

राज्ञा वाह्यशत्रूणां विजयात्पूर्वमेवाभ्यन्तर (काम-क्रोध-मोह-मद-मत्सराः) शत्रवो जिताः। पश्चात् कूटनीत्या युद्धेन चोभाभ्यां शत्रवः पराजिताः। राज्ञोऽतिथेः समये दूतानां जालं विस्तृतमासीत्, येन प्रजानां कापि वार्त्ता तस्मै प्रच्छन्ना

नाभवत् । मंत्रिभिस्सह नित्यं मन्त्रणा जायते स्म । परन्तु मन्त्रणानां विषयास्सदा गुप्ताः जायन्ते स्म । शत्रुभ्यस्स सदा सावधान आसीत् । ऐश्वर्यशाल्यपि स कुमार्गे पदन्यासं नाकरोत् । यतो ज्वार-समयेऽपि यदा समुद्रो वर्द्धते तदा नदीनामेव मार्गेण, नान्यथा ।

अपथेन प्रववृते न जातूपचितोऽपि सः,
वृद्धौ नदीमुखेनैव प्रस्थानं लवणाम्भसः ।

—१७।५४

शासकः पथभ्रष्टो न स्यादेतस्य कीदृशं सुन्दरमुदाहरणं वर्त्तते । राजातिथिः प्रजायां कदापि नासन्तोषमुत्पादितवान्! शत्रुदोषाणां लाभमादाय तान् नष्टान-करोत् । विघ्नेभ्यस्तपस्विनां रक्षामकरोत् । चौरेभ्यः प्रजासम्पदं जुगोप । चतुर्भ्यो वर्णेभ्यो तद्धनानुसारं षडंशं गृह्णन्त आसन् । ते सम्यग्रूपेण षड्गुणानां (सन्धि-विग्रहध्यानासन-संश्रय-द्वैधीभावानां राजगुणानां साधु-व्यवहारं जानन्ति स्म । साम-दाम-दण्डभेदानां चतुर्भिरुपायैः सह राजनीति-परिचालनं कुर्वन्ति स्म ।

रघुवंश-महाकाव्यस्यान्तिमसर्गे महाकविकालिदासो महाराजस्याग्निवर्णस्य हृदयद्रावकं विनाशं चित्रितवान् । राज्ञि मार्गच्युते तस्य विनाशो निश्चितः । एष एव महाकवेः निष्कर्षः ।

रघुवंश-महाकाव्याधृताः निम्नाङ्किताः राजगुणाः प्रकटिताः सन्ति ।

१. प्रजापालनम्, २. दुष्टनिग्रहः, ३. दानम्, ४. धार्मिक-कार्य-सम्पादनम्, ५. कोषार्जनम्, ६. कोष-संबर्द्धनम्, ७. राज्यविस्तारहेतवे दिग्विजययात्राक्षमता, ८. प्रजासमृद्धये सार्वजनिक-कार्य-निर्माण-प्रवृत्तिः, ९. गुरुजन-सेवा, १०. व्यसन-त्यागः, ११. कामक्रोधाद्यन्तरङ्ग-शत्रुजयः, १२. निष्पक्षता, १३. सत्यवादिता, १४. उदारता, १५. विनयशीलता तथा १६. गम्भीरता ।

रघुवंशे वर्णितराजधर्मानुसारं राजशासन-प्रबन्धाय मन्त्रिमण्डलस्यापि सहयोगः प्राप्त आसीत् । महाकविना लिखितम्—

तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च,
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ।

—रघु० १।२०

मन्त्रिमण्डलं गुप्तरूपेण मिलति स्म । मन्त्रणामकरोत् । स्वनिर्णयं यथासमयं

प्रकाशितमकरोत्। मालविकाग्निमित्रनाटकेनाऽपि मन्त्रिमण्डलस्य[1] मन्त्रणया -राज्य-सञ्चालनस्य समर्थनं भवति। कालिदासनाटकैः मन्त्रिणां कार्य-विभाजनस्य ज्ञानं जायते। अभिज्ञानशाकुन्तलमालविकाग्निमित्रयोः युद्धमन्त्रिणः, करमन्त्रिणः, राजकोषमन्त्रिणः, अमात्यस्य, पुरोधसः, धर्माध्यक्षस्य, नागरिकश्यालस्य, राष्ट्रियस्य, नगरस्य शान्तेः, रक्षोत्तरदायित्वस्य च निर्देशो विद्यते।

न्याय-सेना-सुरक्षा-सम्पत्ति-विभागा अद्यतनविभागसदृशा एव निर्दिष्टाः सन्ति। ( रघुवंशम् ८।१६, १७।५०, १७।६८, १०।८६; १७।४७, १७।५२, १७।६७ ) रघुवंशस्य निर्दिष्ट-श्लोकेषु प्रभुमन्त्रोत्साहशक्तीनां सहायतया सरलतापूर्वक-राज्य-भारवहनस्य निर्देशः कृतोऽस्ति। सामदामदण्डभेदनीतीनां ज्ञानमावश्यकमासीत्। दुर्ग-सन्धि-विग्रह-यानासनादिषड्गुणानां मौल-भृत्य-सुहृच्छ्रेणी-द्विषदाटविकादि बलानामुपयोगं राजाकरोत्। युद्धे सफलतायै वनपरिष्कारस्य च कलाकौशलं राज्ञे ज्ञातमासीत्। (रघुवंशम् ४।३१) "कूटयज्ञविधिज्ञे"-पदेनैतद्ध्वन्यते यद्-राजा कूटनीतिज्ञोऽपि कूटनीतेः प्रयोगं नाकरोत्।

प्राध्यापक, राजनीति-विज्ञान-विभाग,
एच० डी० जैन कालेज, आरा,
( मगधविश्ववि[illegible]लय )

---

१. तेन हि मन्त्रिपरिषदं ब्रूहि—मालविका० अङ्कः ४
एवममात्यपरिषदे निवेदयामि—मालविका० अंकः ५

# कालिदासकाव्येषु वर्णिताः कुलपतयः

प्राध्यापक—चन्द्रदेव रायः

प्राचीन-भारते शिक्षायै, संस्कृत्यै तथात्मसाधनायै परमरमणीयाश्रमव्यवस्थासीत् । एतेषामाश्रमाणां स्थापना नगराद्बहिः कस्मिश्चिदपि तादृशे स्थानेऽभवत्, यत्र नागरिककोलाहलस्याभाव आसीत् । परन्तु प्रकृतेः सर्वासां सामग्रीणां सौलभ्यमभवत् । बौद्धजातक-ग्रन्थेषु तक्षशिलायां, वाराणस्यां, राजगृहे, कोशलादि स्थानेषु च शिक्षापीठस्य निर्देशो लभ्यते । बुद्ध-समकालीनस्य मगधस्य सम्राजो राजवैद्यस्य जीवकस्य राजकुमारप्रसेनजितश्च शिक्षा तक्षशिलायामेवाभूत् । गुप्तकाले नालन्दायाः सुप्रसिद्धविश्वविद्यालयस्योल्लेखः प्राप्यते, यत्र विधिवत् कुलपतयो नियुक्ताः जायन्ते स्म । शिक्षायाः समस्तमुत्तरदायित्वं कुलपतौ निर्भरमासीत्[1] । महान् विद्वान् तथा शिष्ट एव जन इदं पदमलङ्कुर्वन्नासीत् । नालन्दाविश्वविद्यालयस्य सर्वप्रथमः कुलपतिः धर्मपाल आसीत् । तत्पश्चात् तच्छिष्यः शीलप्रभ एतस्य कुलपतिर्बभूव । कुलपतिर्न केवलशिक्षादीक्षा-प्रवीण एवाभवत्, प्रत्युत ग्रन्थ-निर्माणकार्य-सम्पादनमप्यकरोत् ।

महाकविकालिदासस्य ग्रन्थेषु कण्वस्य, वाल्मीकेः, च्यवनस्य, वरतन्तोश्च नामानि कुलपतिरूपैरायातानि । राजाश्रये, गुरुकुले तथर्षीणामाश्रमेष्वपि शिक्षादानमभवत् यत्र विशेषाध्ययनशीलव्यक्तित्वानां शिक्षाग्रहणमभूत् । तेऽध्ययनाध्यापनाभ्यां सह यज्ञ-यागादिभिस्तपस आराधनया चात्मसाधनां कुर्वन्त आसन् । भारद्वाजस्य वाल्मीकेश्चाश्रमाः प्राचीनकालादेव स्वसांस्कृतिकसम्पद्भ्यः प्रख्याताः सन्ति[2] । दुर्वासा ऋषिः स्वदशसहस्रशिष्यैः सह स्वगुरुनरेशं द्रष्टुकाम आगच्छति[3] ।

---

१. Buddhist Records of western world Vol 2 P. 171

२. वाल्मीकिरामायणम् ६।१२३।५१

३. शिष्यायुतसमापेतो....महाभारतम् ३।२६२।८

महाभारते मार्कण्डेयाश्रमस्य कण्वाश्रमस्य चोल्लेखः प्राप्यते, यत्र ज्ञानस्य विभिन्न-शाखानामध्ययनं क्रियमाणमासीत्[1]।

कालिदास-निरूपित-कुलपतीनामाश्रमेषु विशेषतो वेदस्य शिक्षणकार्यमभवत्। कुलपतीनामाश्रमाः सघनवनेष्ववस्थिता आसन्। तेऽवश्यमेव वेदशिक्षार्थमुपयुक्ता अभवन्। अभिज्ञानशाकुन्तले काश्यपगोत्रीयकण्वर्षेराश्रमस्य निर्देश आयाति। कण्व एवात्र कुलपतिरासीत्। दुष्यन्तो यदाश्रमसमीप आगच्छति, तदा वैखानस आश्रमस्य परिचयं ददत्कथयति—

'राजन्, समिदाहरणाय प्रस्थिता वयम्। एष खलु कण्वस्य कुलपतेरनुमालिनीतीरमाश्रमो दृश्यते। न चेदन्यकार्यातिपातः, प्रविश्य प्रतिगृह्यतामातिथेयः सत्कारः।

स्पष्टमेतद्यत् कुलपतेः[2] कण्वस्याश्रमो मालिनीनदीतटे शान्तवातावरण आसीत्। तत्र च राजनैतिक-वितण्डावादष्याभावोऽभवत्। आश्रमे प्रत्येकशिक्षार्थिकृते यज्ञोऽनिवार्यधर्म आसीत्। आश्रमेषु नरनार्योस्सहैव निवासोऽभवत्। आश्रमभूमिरत्यन्त-शान्तसाधनामयी चाभूत्। "शान्तमिदमाश्रमपदम्" (अभि० शा० १।१६) उक्त्या स्पष्टमेतद्ध्वन्यते यदाश्रमवासिषु शमगुणप्राधान्यमासीत्। श्रृङ्गाररसस्य प्रभावस्तेषु नाभवत्। आश्रमेष्वतिथिसत्कारक्रियापि सम्पद्यते स्म। महर्षिकण्वो यदा शकुन्तलायाः दुर्भाग्यशमनार्थं सोमतीर्थयात्रायां गत आसीत्, तदातिथि-सत्कारभारं शकुन्तलोपरि समर्पितवान्। यद्यपि तत्रान्यर्षेः वयस्कन्यक्तीनाञ्चाभावो नासीत्, तथाप्यत्यन्तात्मीयतया सत्कारदायित्वं शकुन्तलोपरि समर्पितमभवत्[3]।

---

१. महाभारतम् ३।२७१।४८

२. प्राचीनसमये कुलपतिः कोऽपि सामान्यजनो नाऽभवत्। प्रत्युत एतादृशो महान् जनः कुलपतिपदे नियुक्तोऽभवत्, यच्छत्रच्छायायां दशसहस्रशिष्याणां पालन-पोषणैः सह शिक्षाभूत्।

मुनीनां दशसहस्रं योऽन्नपानादिपोषणात्,
अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः।

पद्मपुराणेऽपि कथितमस्ति—

आचार्यो बहुशिष्याणां मुनीनामग्रणीस्तु भव्यः,
व्रतयज्ञादिकर्माढ्यः स वै कुलपतिः स्मृतः।

३. इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय नियुज्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः।

—अभि० शा० प्रथमाङ्के द्वादश-श्लोकपश्चात्।

कुलपतेः कण्वस्य चरित्रं कविनादर्शपरैरादर्शव्यापकस्यादर्शपितुः रूपेऽङ्कितम्। स हि तपस्वी तथान्तर्ज्ञानी वर्त्तते। यदा मारीचाश्रमे दुष्यन्तशकुन्तलयोर्मिलनं भवति, तदादितिरेतत्सुखदसमाचारं कुलपतिकण्वसमीपं प्रापयितुं मारीचं निवेदयति। सन्दर्भेऽस्मिन् मारीचस्तत्सर्वज्ञतां निरूपयति। कविर्मारीचमुखेन वादयति—"प्रत्यक्षं सर्वमेव तत्र भवतः। तपसः प्रभावात् कण्वस्य सर्वं प्रत्यक्षमस्ति। (अभि० अं० ७) सिद्धमेतद्यत् कण्वस्तपस्वी ज्ञानी नीतिज्ञश्चास्ति। तेन शकुन्तला-गमनवेलायां य उपदेशः तस्यै दत्तः, सोऽद्यापि पतिगृहं गच्छन्तीभ्यो बालिकाभ्यः पितृभ्यां दीयते। कण्वः कन्यां परकीयसम्पदं मनुते। स उक्तवान्—

अर्थो हि कन्या परकीय एव तामद्य संप्रेष्य परिग्रहीतुः,
जातो ममायं विशदः प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा।

—अभि० शा० ४।२२

कण्वः शोचति यत्प्रेम परमविलक्षणं भवति। अद्य शकुन्तलां पतिगृहं संप्रेष्य मम मनः शान्तं जातम्। यतः कन्या वस्तुतः परकीयैव सम्पद् भवति। अद्य मम मनः तथैव शान्तिं गृह्णाति यथा कश्चन जनः कस्यापि न्यासं प्रत्यर्प्य गृह्णाति।

कण्वेऽपारं वात्सल्यमस्ति। तथा सः क्षमाशीलोऽपि वर्त्तते। शकुन्तलायाः गन्धर्वविवाहवृत्तं श्रुत्वा स मनागपि रुष्टोनाभवत्। शकुन्तलाया एतदाचरणं धर्म-विरोधि वर्त्तते तथापि क्षमाशील उदारश्च पिता कण्वस्तस्य समर्थनमेव करोति।

'तदो जाव एणं लज्जावणदमुहिं परिसज्जिअ तादकस्सवेण एव्वं अहिणंदिदं दिट्ठिआ धूमा उलिद दिट्ठिणो वि जअमाणस्स पावए एव्व आहुदी पडिदा। वच्छो सुसिस्सपरिदिण्णा विज्जा विअ असो अणिज्जासि संवुत्ता। अज्ज एव्व इसिरक्खिदं तुमं भत्तुणो सआसं विसज्जेमित्ति।'

—अभि० शा० चतुर्थाङ्के तृतीयश्लोकान्तिमं गद्यखण्डम्।

अनेनोद्धरणेन स्पष्टमेतद्यत् कुलपतिः कण्वः क्षमाशीलस्तु वर्त्तते एव सहैव विद्याविनयमहत्त्ववद्धोऽप्यस्ति।

कुलपतेर्दृष्टिर्लोकानुग्रहे तथा सत्कारोपरि बद्धासीत्। तेन शकुन्तला लेखने गीतरचनायामपि शिक्षितासीत्। कुलपतौ विद्यासिद्धिजन्यमपूर्वं सामर्थ्यमासीत्। अस्माकमेतत्कथनस्य पुष्टिर्निम्नाङ्कितर्षिकुमार-प्रार्थनया भवति।

'तत्र भवतः कण्वस्य महर्षेरसान्निध्यात् रक्षांसि न इष्टिविघ्नमुत्पादयन्ति। तत्कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति।'

—अभि० २।१५ अनन्तरं गद्यखण्डम्।

सिद्धमेतद्यत्कण्वप्रभावेण यज्ञे राक्षसानां विघ्ना नाभवन् । ऋषयस्सर्वे यज्ञादि-क्रियाणां सम्पादनं निर्भयाः कुर्वन्ति स्म । एवं प्रकारेण महाकविकालिदासेन विद्या-व्यसनिन उग्रतपस्विनः कण्वस्य चरित्रे दयालुतायाः, क्षमाशीलतायाः, दूरदर्शितायाः, लोकानुग्रहतायाः, अतिथिसत्कारपरायणतायाः, संगठनक्षमतायास्तथा वत्सलता-प्रभृतिगुणानाञ्च समावेशः कृतः ।

## कुलपतिर्वरतन्तुः

महाकविकालिदासो वरतन्तोर्विद्यायाः, बुद्धेः, व्यवस्थायाश्च पर्याप्तप्रशंसां कृतवानस्ति । कविना तत्सम्बन्धे व्यलेखि—

अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे कुशली गुरुस्ते,
यतस्त्वयाज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः :

—रघुवंशम् ५।४

कायेन वाचा मनसापि शश्वद्यत्संभृतं वासवधैर्य्यलोपि,
आपाद्यते न व्ययमन्तरायैः कच्चिन्महर्षेस्त्रिविधं तपस्तत् ।

५।५

यथा सूर्यस्स्वप्रकाशेन सुपुप्तसंसारमुद्‌बुद्धं करोति, तथैव कुलपतिर्वरतन्तुस्स्वज्ञान-ज्योतिषा शिष्यानुद्‌बुद्धानकुर्वन् । स मन्त्रद्रष्टासीत् । तस्य तपश्चरणं नितान्तमुग्रं कठोरञ्चाभवत् । तस्य तपसे इन्द्रोऽपि चिन्तितो बभूव । वरतन्तोर्गुरुकुले प्रकृतेः पूर्णरूपेण निवास आसीत् । तस्यै तद्‌गुरुकुलमाश्रमरूपेण सञ्चालितमासीत् । विविधानां वृक्षाणां लतागुल्मानाञ्च तत्र संवर्द्धनं क्रियमाणमासीत् । मृगास्तत्र निर्द्वन्द्वं विचरन्ति स्म । ते सर्वप्रकारेण तत्र स्नेहं संवर्द्धनञ्चप्राप्नुवन्तिस्म ।

आश्रमनिवासिनस्समस्तस्नातकाः स्नानं संध्यातर्पणादिक्रियाश्चाकुर्वन् । शिक्षापेक्षया दीक्षा तत्राधिका ध्यातव्यासीत् । महाराजो रघुः कौत्सं समाचारं पृच्छन्नाश्रमसम्बन्धिनीं सर्वां व्यवस्थां प्रकाशितवान् । आश्रमस्य पाठ्यक्रमे चतुर्दश विद्यानां स्थानमासीत्[1] । एतासु विद्यासु वेदस्य, वेदाङ्गस्य, स्मृतेः, उपनिषदः, अर्थशास्त्रस्य, कामशास्त्रस्य, नाट्यशास्त्रस्य, ज्योतिषशास्त्रस्य, राजनीतेः, खगोलस्य, व्याकरणस्य, काव्यस्य, धनुर्वेदस्य तथायुर्वेदस्य शिक्षा परिगणितासीत् । महाकविकालिदासस्य शिक्षासम्बन्धिनो ये विचारा अन्यत्रोपलभ्यन्ते तैरप्युक्त-

१. षडङ्गी वेदाश्चत्वारो मीमांसान्वीक्षिकी तथा धर्मशास्त्रं पुराणञ्च विद्या एताश्चतुर्दश ।

—अभिधान चि० २।१६७

विद्यानां समर्थनं भवति। 'रघुवंशस्य छाया हि भूमेः शशिनः' (१४।४०), 'तस्मिन् पुनः सरस्वतीकृतकाव्यवन्धे' (विक्रम अङ्क ३) तौ संधिषु व्यञ्जित-वृत्तिभेदम्, रसान्तरेषु प्रतिवद्धरागम्, (कुमार० ७।९१), वागर्थाविव संपृक्तौ (रघु० १।१), सिन्धुतीरविचेष्टनैः (रघु१ ४।६७), इतिहास-निवन्धेषु (अभि० अ० ३) पुराणस्य कवेस्तस्य (रघु० १०।३६) तथा साङ्गञ्च वेदमध्याप्य (रघु० १५।६३) प्रभृत्युद्धरणैराश्रमस्य पाठचक्रमः प्रकाश्यते। नात्र संदेहो यत् कुलपतिवरतन्तोराश्रमो विद्यासंस्कृतेः प्रधानकेन्द्रमासीत्। कौत्ससदृशाः कियन्तः स्नातकास्तत्राधीयते स्म। आश्रमसुव्यवस्थायास्तथाध्यापनप्रवीणतायाः प्रसिद्धिः सर्वत्रासीत्। रघुना कौत्सः श्रुतपारदृश्वा कथितः। (रघु० ५।२४) एतेनापि तत्रत्यस्नातकानामाचार्याणाञ्चसम्बन्धे ज्ञानं भवति।

## कुलपतिः वाल्मीकिः

कुलपतिर्वाल्मीकिरत्यन्तकृपालुर्लोकशास्त्र - मर्यादाभिज्ञस्तथा तपश्चरणादिसाधनासु रतो दृश्यते। तस्याश्रमे मुनिकन्यका अपि निवसन्ति। तत्र प्रेम-वात्सल्ययोः पूर्णसाम्राज्यमस्ति। संध्यायां मृगाः सिंहाश्च सहैव निवसन्ति। आश्रमवृक्षाः लताश्च जलैः सिच्यन्ते। स्नातकाः पर्णकुटीः निर्माय पृथक्-पृथक् निवसन्ति। तस्य कुटीष्विङ्गुदीतैलप्रदीपाः प्रज्वलन्ति। कविना वाल्मीकेः सम्बन्धः दशरथेन जनकेन च सहोक्तः। महर्षिः स्वयं सीतां प्रति कथयति—

> तवोरुकीर्त्तिः श्वसुरः सखा मे सतां भवोच्छेदकरः पिता ते,
> धुरि स्थिता त्वं पतिदेवतानां किं तन्न येनासिममानुकम्प्या।
>
> —रघु० १४।७४

आश्रमस्य शान्तेस्तत्रत्यनिवासिनां परस्परसौहार्दस्यसम्बन्धे च स्वयं महर्षिः सीतां प्रति कथयति—

> तपस्विसंसर्गविनीतसत्त्वे तपोवने वीतभया वसास्मिन्,
> इतो भविष्यत्यनघप्रसूतेरपत्यसंस्कारमयो विधिस्ते।
>
> —रघु० १४।७५

> अनुग्रहप्रत्यभिनन्दिनीं तां वाल्मीकिरादाय दयार्द्रचेताः,
> सायं मृगाध्यासितवेदिपार्श्वं स्वमाश्रमं शान्तमृगं निनाय।
>
> —रघु० १४।७९

कुलपतिः लवकुशौ वेद-वेदाङ्गान्यध्यापितवान् । तथा स्वरचित-रामायण-गानं शिक्षितवान् । कविकालिदासः कुलपतिं वाल्मीकिं 'मन्त्रकृतं' ब्रवीति—

सखा दशरथस्यापि जनकस्य च मन्त्रकृत्,
सञ्चकारोभयप्रीत्या मैथिलेयौ यथाविधि ।

—रघु० १५।३१

अर्थात् स मन्त्रद्रष्टर्षिरासीत् । तस्याश्रमे शिक्षायाः साधनायाश्च मूर्त्तिमद्रूपमासीत् । कविना व्यलेखि—

पुष्पं फलं चार्तवमाहरन्त्यौ बीजं च बालेयमकृष्टरोहि,
विनोदयिष्यन्ति नवाभिषङ्गामुदारवाचोमुनिकन्यकास्त्वाम् ।

रघु० १४।७७

पयोघटैराश्रम बालवृक्षान् संवर्धयन्तीस्वबलानुरूपैः,
असंशयं प्राक्तनयोपपत्तेः स्तनन्धयप्रीतिमवाप्स्यसि त्वम् ।

—रघु० १४।७८

## च्यवनर्षिः

महाकविकालिदासस्य चतुर्थः कुलपतिश्च्यवनर्षिरस्ति । एतस्य वर्णनं विक्रमोर्वशीयनाटके वर्त्तते । उर्वश्या आयुर्नामकः पुत्रो जायते । सा पतिवियोगशङ्कया पुत्रं कुलपतेः च्यवनस्याश्रमे शिक्षादीक्षार्थं त्यजति । च्यवनेन तस्य क्षत्रियकुमारस्य जातकर्मादयस्सर्वे संस्काराः विहिताः । तस्य शिक्षादीक्षाणाञ्च पूर्णप्रबन्धः कृतः । कविः लिखितवान्—

'जं खत्तिअ कुमारअस्स जादकम्मादि-विहाण' तं से भअवदा चवणेण असेसं अणुचिट्ठिदं । गहीविज्जो धणुव्वेदे अहिविणीदो ।'

—विक्रम०-पञ्चमाङ्क-दशश्लोकानन्तरगद्यम् ।

'गहीदामिसो किल गिद्धो पादवसिहरे णिलीअमाणो अणेण लक्खीकिदो बाणस्स ।'

( तदेव )

उल्लिखितोद्धरणैस्स्पष्टमेतद्यच्च्यवनेन आयुः कुमारो धनुर्वेदेऽपि पूर्णशिक्षित आसीत् । तेन कुमारेण यदाश्रमविपरीतमाचरणं कृत्वा वृक्षासीनं समांसखण्डं गृध्रं

प्रति वाणसंधानं कृतं तदा कुलपतिना निर्णीतं यदयं कुमारः पितुः समीपे प्रेषणीयः फलतो विद्वानायुः कुमारः पितृ-समीपं प्रेषितः ।

महाकविकालिदासवर्णितानामुल्लिखितचतुर्णां कुलपतीनामाश्रमव्यवस्थां वीक्ष्य निम्नाङ्कितो निष्कर्ष उपस्थितो भवति—

१. कालिदासस्य कुलपतयो दयालवस्स्नातकाभ्युत्थानाय सर्वैः प्रकारैः सहायकाः सुव्यवस्थापकाश्च सन्ति ।

२. शिक्षया बौद्धिक-प्रगत्या च सह दीक्षायाः नैतिक-सांस्कृतिक-साधना-नामभ्यासस्य चावश्यकता कुलपतिदृष्टावासीत् ।

३. बौद्धिकमानसिक-विकासानन्तरमाश्रमेषु शारीरिकश्श्रमोऽप्यनिवार्य आसीत् । स्नातकानां कर्त्तव्येषु वृक्षादीनां सेचनस्य, आश्रममृगादिपशूनां संरक्षणस्य कुशादीनां दूरस्थप्रदेशेभ्योऽप्यानयनस्य गणनासीत् ।

४. गुरुकुलेष्वाश्रमेषु वा सहशिक्षाप्यासीत् । ऋषिबालास्तर्षिबालिकाः संयमपूर्वकं सहैव शिक्षिता अभूवन् । कुलपतेरतिरिक्तोऽन्याध्यापकवर्गोऽप्यासीत् । स स्वविषयस्य पूर्णपण्डितोऽभवत् । तेन च स्नातका अध्यापिता अभूवन् ।

५. वेदवेदाङ्गानां शिक्षा प्रयोगात्मकविधिनाप्यभूत् । प्रायेण सर्वे स्नातकाः संध्यापर्वणे हवनादिकार्याणि चाकुर्वन् । पुष्पार्चनविधिराश्रमेषु प्रचलित आसीत् ।

६. आश्रमेषु पठनैः सह लेखनस्यापि शिक्षाभूत् । शकुन्तला चित्रकलायां लेखनेऽपि शिक्षितासीत्[1] ।

७. राजकुमारेभ्यो धनुर्वेदस्यर्षिकुमारेभ्यो यजुर्वेदस्य तथा सामान्यवर्गेभ्यो ललितकलायाः शिक्षा दीयमानासीत् ।

८. सामान्यतः कुलपतिर्दशसहस्रस्नातकानामाश्रम एवावसत् । किन्तु कालिदासवर्णितकुलपतीनामाश्रमेषु विद्यमानानां छात्राणां संख्यासु न कोऽपि प्रकाशः पतति । परमेतावत्तथ्यं यत् कुलपतिः स्नातकानामभ्युत्थानाय स्वसमस्त-शक्तिव्ययमकरोत् ।

९. आश्रमेषु स्नातकनिवासाय पर्णकुटीनां व्यवस्थासीत् । भोजनावास-व्यवस्था गुरुदक्षिणायां प्राप्तेनैव धनेनाभवत् । गुरुदक्षिणा राज्ञां महाराजानां धनिकानाञ्च सहयोगेनैव प्राप्यते स्म । कौत्सः चतुर्दशकोटि-स्वर्णमुद्राः महाराज-

---

१. अभि० तृतीयाङ्के त्रयोदशश्लोकानन्तरं गद्यम् ।

रघोः गृहीत्वा कुलपतये वरतन्तवे समर्पितवान्। वरतन्तुश्च तामर्थराशिमाश्रम-व्यवस्थायां नियोजितवान्। अन्यशिक्षकेषु। सत्स्वपि गुरुदक्षिणां कुलपतिरेव-गृह्णाति स्म। एतेनैतद्ध्वन्यते यद्धनराशौ कुलपतेः स्वत्वमासीत्। व्यक्ति-विशेषस्य कस्यचन नहि। स्नातका इङ्गुदीतैलस्य दीपं प्रज्वाल्य रात्रावपि पठन्ति स्म। कुलपतेर्वाल्मीकेराश्रमे व्यवस्थेयमासीत्।

अनुसन्धित्सु, संस्कृत-प्राकृत-विभाग
एच० डी० जैन कॉलेज, आरा,
( मगधविश्वविद्यालय )

# महाकविकालिदासस्योपरि वात्स्यायन-प्रभावः

प्राध्यापकचन्द्रसेनकुमारः



महाकविकालिदासो रसवादी कविरस्ति। अस्य रचनासु भावपक्ष-कलापक्षयोरभिव्यञ्जनायाश्च चरमसमन्वयः प्राप्यते। नाटक-गीतिकाव्य-महाकाव्य-खण्डकाव्य-प्रभृति-समस्त-काव्यविधासु सर्वत्र तस्य कवित्वशक्तेश्चमत्कारः समाविष्टो विद्यते। प्रकृतेः मनोरममूर्त्याः प्रतिफलने, स्वकाव्यानां पात्राणां चरित्रस्यासाधारणचित्रणे कविरपूर्वसफलतां प्राप्तवान्। जीवनस्य प्रौढानुभवानां यथार्थाभिव्यक्तिः रघुवंशमहाकाव्ये विद्यमानास्ति। कुमारसंभव-मेघदूते तु रसानुभूति-दृष्ट्याद्वितीये स्तः।

महाकवेः समस्त-रचनासु तदीयविभिन्न-जीवनानुभवैः सह भारतीय-साहित्यिक-परम्पराया आदर्शाणाञ्च पूर्णरूपेण दर्शनं जायते। कालिदासस्य शृङ्गार आदर्शपूर्णोऽस्ति तथा तस्यादर्शः स्वयं शृङ्गारमयो विद्यते। स्वस्यैतस्यादर्शस्याभिव्यञ्जनाकृते कविः वाल्मीकेः यावतीं प्रेरणां प्राप्तवान् तदधिकां वात्स्यायनात्। नाटकेषूपलभ्य-पात्राणां मानसिक-क्रिया-प्रतिक्रियाभ्यः कालिदासो वात्स्यायनर्णी वर्त्तते। इदं तथ्यमस्ति यन्महाकविकालिदासोमानवप्रवृत्तेः प्रकृति-सौन्दर्यस्य च यादृशं विराट् तथा गहनं चित्रणं कृतवान् तादृशमन्यकवयो नहि। तद्गृहीतमृणर्मपि स्वाति-नक्षत्रे साधारण-जल-विन्दु-ग्राहिका-शुक्तिका-जल-सदृशमस्ति, यदल्पकाल एव मुक्तारूपेण प्रसूतं जायते। महाकविरपि स्वपूर्ववर्त्याचार्येभ्यः याः कल्पनाः भावनाश्च गृहीतवान्, ताः स्वप्रतिभया स्फीताः विराट्स्वरूपाश्च विधाय प्रदत्तवान्। वयमत्र महाकविकालिदासोपरि वात्स्यायन-प्रभावस्यैव विश्लेषणं करिष्यामः।

यद्यपि समस्तसंस्कृत-महाकाव्येषु वात्स्यायन-प्रभावोदृश्यते तथाप्येतावन्निर्विवादमस्ति यत्कवयश्शृङ्गारचेष्टां मधुपानं पुष्पावचयं जलक्रीडां दोलारोहणप्रभृत्युपकरणं कामशास्त्रादेव गृहीतवन्तः। वर्त्तमानकामसूत्रस्य रचनाकालः खीष्टाब्देः

तृतीया शताब्दी सुनिश्चितास्ति । अथ महाकाव्यानां प्रथितपरम्परा तत्पश्चात् प्रारभ्यते । अतः कामस्य विभिन्नावस्थानां विरहस्य तीव्रानुभूतेरालिङ्गनस्य विविध-प्रकाराणाञ्च ग्रहणं वात्स्यायनादेव जातमिति नाश्चर्यपदवीमधिरोहति ।

कुमारसंभवस्याष्टमसर्गे शिवपार्वतयोः कामक्रीडा वर्णितास्ति । सन्दर्भेस्मिन् कविना यस्याः पारिभाषिक-शब्दावल्याः प्रयोगः कृतः, सा प्रायेण वात्स्यायनस्य कामसूत्रादेव गृहीता वर्त्तते । कविः निमित्तक-स्फुरितक-घट्टितक-चुम्बनानां निर्देशं-कृतवान् । वयमत्र महाकवेः कानिचन पद्यान्युद्धृत्य तद्वीजरूपाणि वात्स्यायनकाम-सूत्राण्यपि प्रस्तोष्यामः । एतत्सत्यं यन्महाकविस्तानि वीजानि न केवलमङ्कुरिता-न्येव कृतवान्, प्रत्युत तानि विशालवटवृक्षस्य रूपाणि प्रदाय स्वकाव्यकौशल-प्रदर्शनं कृतवान् । तस्यैतामेव कल्पनामहं तृणानि खादित्वा मधुर-दुग्ध-प्रदां गां वक्ष्यामः । वात्स्यायनो निमित्तकचुम्बन-प्रसंगे कथितवान् यल्लज्जाशीला नायिका स्वां सदा निगूहितुं कामयते । धृष्टनायकस्स्वाभिलाषपूर्त्यर्थं तां स्वानुकूलां करोति । निश्चेष्टा सती नायिका नायकायात्मानमर्पयति । कविकालिदास एतदेव बीजसूत्रं गृहीत्वा निमित्तिकस्य प्रयोगं कृतवान्[1]—

> चुम्बनेष्वधरदानवर्जितं खिन्नहस्तसदयोपगूहनम्,
> क्लिष्टमन्मथमपि प्रियं प्रभोर्दुर्लभप्रतिकृतं वधूरतम् ।
> यन्मुखग्रहणमक्षताधरं दानमव्रणपदं नखस्य यत्,
> यद्रतं च सदयं प्रियस्य तत् पार्वती विषहते स्म नेतरत् ।

—कुमारसंभवम् ८।८-९

वात्स्यायनस्स्फुरितक-घट्टितकयोर्विवेचने लिखितवान् यदभ्यस्तनायिका शनैः-शनैरात्मसमर्पणं करोति । पश्चान्नयने निमील्य नायकस्य प्रत्युत्तर-स्वरूपा आत्म-शृङ्गारचेष्टास्समर्पयति । सन्दर्भेऽस्मिन् वात्स्यायनेन नखच्छेदालिङ्गनादिक्रियाणां विभिन्नरूपाण्यङ्कितानि । महाकविकालिदासः कामसूत्रस्य द्वितीयाधिकरणस्य तृतीय-चतुर्थ-पञ्चमाध्यायेभ्यः बीजं गृहीत्वा विभिन्नचेष्टाः क्रियाश्च चित्रितवान् । उदाहरणार्थं कतिपयपद्यानि प्रस्तूयन्ते—

> तत्क्षणं विपरिवर्तितह्रियोर्नेष्यतोः शयनमिद्धरागयोः ।
> सा बभूव वशवर्त्तिनी द्वयोः शूलिनः सुवदना मदस्य च ॥

---

१. बलात्कारेण नियुक्ता मुखे मुखमाधत्ते नतु विचेष्टत इति निमित्तकम् । वात्स्यायन-कामसूत्रम् २।३।८ ।

घूर्णमाननयनं स्खलत्कथं स्वेदबिन्दु-मदकारण-स्मितम् ।
आननेन ननु तावदीश्वरश्चक्षुषा चिरमुमामुखं पपौ ॥
तां विलम्बि-तपनीय-मेखलामुद्वहञ्जघनभारदुर्वहाम् ।
ध्यानसंभृतविभूतिरीश्वरः प्राविशन्मणिशिलागृहं रहः ॥

कुमारसम्भवम् ८।७९-८१

ऊरुमूलनखमार्गराजिभिस्तत्क्षणं हृतविलोचनो हरः ।
वाससः प्रशिथिलस्य संयमं कुर्वतीं प्रियतमामवारयत् ॥

कुमार० ८।८७

कुमारसंभवस्याष्टमसर्गीयविविधक्रीडाः, भावनाः, नायकनायिका-चेष्टाश्च कामसूत्रेण प्रभाविताः सन्ति । महाकविकालिदासः शिवपार्वत्योः यां केलिं वर्णितवान्, सा वात्स्यायनेन पूर्णरूपेण समर्थिता विद्यते ।

रघुवंशमहाकाव्यस्यान्तिमसर्गेऽग्निवर्णस्य विविधक्रीडानां चित्रणमस्ति । संदर्भेऽस्मिन् दूतीप्रयोगस्योद्दीपन-सम्बन्धि-विभिन्नोपकरणानाञ्च ग्रहणं वात्स्यायनादेवाभूत् । अग्निवर्णस्त्र-विलास-पिपासाशमनार्थं स्वप्रेयसीः येन प्रकारेण तोषयति, तत्सर्वं वात्स्यायनकामसूत्रे वर्णितमस्ति । सपत्नीर्ष्यायाः प्रेयसीनामङ्ग-प्रदर्शन चेष्टानाञ्च ग्रहणं वात्स्यायनादेव कृतं विद्यते ।

अस्माभिरेवं प्रतीयते यन्महाकविकालिदासोपरि वात्स्यायन-कामसूत्रस्यैतावान् प्रभावो वर्त्तते यत्तेन नागरकस्य यद्रूपं निर्धारितन्तन्निश्चितमेव वात्स्यायन-सम्मतमस्ति[2] ।

---

१. वदने प्रवेशितं चौष्ठं मनागपत्रपावगह्णीतुमिच्छन्ती;
स्पन्दयति स्वमोष्ठं नोत्तरमुत्सहत इति स्फुरितकम्

—वात्स्यायन-कामसूत्र २।३।९

ईषत्परिगृह्य निमीलितनयना करेण च तस्य नयनेऽवच्छादयन्ती जिह्वाग्रेण घट्टयति—इति घट्टितकम् ।

—वा० का० २।३।१०

तथा अधिकरण २।२।२–३१ सूत्र तक, तथा २।३–२-४, २।५।१-३४ तक,

२. वाह्ये च वासगृहे सुश्लक्ष्णमुभयोपधानमध्ये
विनतं शुक्लोत्तरच्छदं शयनीयं स्यात्..........।

—१।४।४

कालिदासस्य विलासी नायकोऽपि नागरक-सदृशस्सम्पत्तिशाली नगरनिवासो च वर्त्तते। तस्य भवनेषु च तद्युगीनसमस्तसुख-सामग्र्यो रमण्यश्च प्रस्तुता आसन्। सोऽपि वात्स्यायनस्य नागरक-सदृश एव शृङ्गारी वर्त्तते। स स्नात्वा पुष्पमालाधारणं करोति। पुष्परसेन सुगन्धित-द्रव्याणि सेवते। चित्राणि रचयति। संगीतगोष्ठीषु, नृत्येष्वभिनयेष्वपि च सम्मिलितो भवति। कालिदासस्य समस्त-नायकाः संगीतस्य चित्रकलायाश्च रसिकाः सन्ति। ते जलविहारं कुर्वन्ति। शरीर-सुगन्धाय ते कुङ्कुम-चन्दनानुलेपं[1] कुर्वन्ति।

रघुवंशस्य सप्तमसर्गे विभिन्न-नारीणां रूपशृङ्गारस्य वर्णन-प्रसङ्गेऽ-ञ्जनस्यालक्तकस्य, वेणीबन्धनस्य, मदिरापानस्य, नीवी-बन्धनस्य च निर्देशो विद्यते। अयं समस्त-सन्दर्भः वात्स्यायन-प्रभावितोऽस्ति। नायिकानां विभिन्न शृङ्गारः कामसूत्रसदृश एवोपलब्धो वर्त्तते। नायकानां दिनचर्यापि नागरकदिनचर्या-सदृश्येवास्ति।

कुमारसंभव-सप्तमसर्गे पार्वतीमण्डनस्य यद्वर्णनं कृतमस्ति, तत्कामसूत्रस्य विद्यते। सख्यः पार्वत्या आर्द्रकेशान् धूप-धूमेन शोषयित्वा तत्र कुसुमानि-ग्रथ्नन्ति। दूर्वानुस्यूतमधूकपुष्पमालया तस्याः वेणीबन्धनं कुर्वन्ति। काचन श्वेतोद्वर्त्तनं तस्याः शरीरे लिप्त्वा रक्तगोरोचनैस्तच्चित्रितं करोति। तदानीं पार्वत्याः रूपं पुलिनेषूपविष्टैश्चक्रवाकैः युक्तां गङ्गाधारामपि तिरस्करोपि।

—कुमार०-७।१४-१५

पार्वत्याः कपोलौ लोध्रचूर्णेन गोरोचनेन च कृतगौरौ स्तः। तस्याः कर्णयोः रक्षिताः यवाङ्कुराः कपोलविलम्बिनोऽद्भुताः प्रतीयन्ते। दर्शकाक्षीणि पार्वत्या अस्मिन् प्रसाधने सुतरामाकृष्टानि जायन्ते।

—कुमार स० ७।१६

तस्याश्चरणयोः नखेषु च रञ्जक-द्रव्यैः प्रसाधनमद्भुतशोभामावहति। सख्य-स्तस्या इदंप्रसाधितलावण्यमालोक्य कथयन्ति यत् तवेमौ रक्तौ गौरचरणौ प्रति-शिरश्चन्द्रकलास्पर्शं कुरुताम्। सख्या एतद्व्यङ्ग्यं पार्वत्याः मनसे यद्यपि रोचते तथापि सा प्रत्यक्षतः क्रोधं व्यक्तं कुर्वन्ती कथयति।

कालिदासस्य प्रसाधनरूपमण्डनानि च वात्स्यायन-प्रभावितानि सन्ति[2]

---

१. रघुवंश ६।४८-४९

२. स प्रातरुत्थाय कृतनियतक्रियः, गृहीतदन्तधावनः, मात्रयानुलेपनं धूपं स्रजमिति च गृहीत्वा दत्वा सिक्थमलक्तकं च दृष्ट्वादर्शे मुखं गृहीतमुखवास-ताम्बूलः कार्याण्यनुतिष्ठेत्।

—१।४।५ (वात्स्यायन-कामसूत्रम्)

ऋतुसंहारे ग्रीष्मवर्णनप्रसङ्गे यस्य मण्डनस्य निर्देशः कृतोऽस्ति, तद्वात्स्यायनाद्गृहीतमपि परमरमणीयं वर्त्तते। ग्रीष्मर्तौ नार्यः कटौ सूक्ष्मकौशेयवस्त्रं शीतलां मेखलाञ्च दधति। चन्दनलिप्तस्तनयोः हारमाभूषणञ्च धारयन्ति। स्नानोपरान्ते ता आर्द्रकेशान् सुगन्धितद्रव्यैः सुगन्धितान् कुर्वन्ति। एवं प्रकारेण ताश्शीतलोपकरणैस् सज्जिताः भूत्वा स्वप्रियान् कठिननिदाघं सोढुं समर्थान् कुर्वते। यथा—

> नितम्ब-बिम्बैः सदुकूलमेखलैः स्तनैः सहाराभरणैः सचन्दनैः,
> शिरोरुहैः स्नानकषायवासितैः स्त्रियो निदाघं शमयन्ति कामिनाम्।

—ऋतुसंहार १।४

महाकविकालिदासेन श्रृङ्गार-चेष्टानां विविधविलासानां जलविहार-प्रसाधनानां विविध-कामक्रीडानामंगरागाणाञ्च वर्णने वात्स्यायनकामसूत्राद्बीजानि गृहीतान्येवान्यावश्यकसामग्र्यपि वात्स्यायनाद्गृहीता। अभिज्ञानशाकुन्तलस्य चतुर्थाङ्के शकुन्तलागमनवेलायां महर्षिकण्वः सदुपदेशान् यच्छन् कथयति यत् त्वया पतिगृहं गत्वा तथाचरणीयम्, यथा तव कुलस्योपहासो न स्यात्। योग्याः कन्याः पितृकुलमुज्ज्वलयन्ति। सः कथयति—

> शुश्रूषस्व गुरून् कुरुप्रियसखीवृत्तिं सपत्नीजने,
> पत्युर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः,
> भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी,
> यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः।

—अभि० शा० ४।१८

त्वया स्वगुरुजनानां सेवा कार्या। स्वसपत्नीभिः सह सखीव्यवहारः कार्यः। तिरस्कृतयापि पत्या क्रोधेन तत्प्रतिकूलमाचरणं न विधेयम्। स्वाश्रितेषूदारया भाव्यम्। स्वैश्वर्य्ये त्वयि नाभिमानं स्यात्। एवमाचरणवत्यो नार्यः गृहलक्ष्मीपदे प्रतिष्ठिताः भवन्ति, एतद्विपरीताश्च कुलाभिशापाः जायन्ते।

पतिगृहं गच्छन्त्यै पुत्र्यै पितुरेष उपदेशः जीवनपाथेयमस्ति। महाकविकालिदासेनैष उपदेशः वात्स्यायनस्य कामसूत्राद्गृहीतः। तेन चतुर्थाधिकरणस्य (३७, ३८ तथा ३९) सप्तत्रिंशाष्टात्रिंशैकोनचत्वारिंशसूत्राणामेकत्र संयोजनं कृतम्। पद्येऽस्मिन् कथितसंदर्भस्य चत्वारिंशैकचत्वारिंश-सूत्रयोरपिभावाः गृहीताः। उभयोस्सन्दर्भयोः तुलनया स्पष्टं जायते यत् महाकविकालिदासः केन प्रकारेण वात्स्यायन-तथ्यं गृहीत्वा एकं नवीनं रूपं प्रदत्तवान्। एतदेव कारणमस्ति यद-

भिज्ञानशाकुन्तले वोद्धव्यौचित्य-प्रकरणौचित्ययोरभिघातो न जातः। कामसूत्रे वर्त्तते—

श्वश्रू-श्वसुर-परिचर्या, तत्पारतन्त्र्यमनुत्तरवादिता परिमिताप्रचण्डालापकरण-मनुच्चैर्हासः तत्प्रिया प्रियेषु स्वप्रियाप्रियेष्विववृत्तिः ४।१।३७

भोगेष्वनुत्सेकः ४।१।३८

परिजने दाक्षिण्यम् ४।१।३९

नायकापचारेषु किंचित्कलुषितानात्यर्थं निर्वदेत्

—४।१।१९

उल्लिखितसूत्रेषु तत्र तत्र विकीर्णान् विचारानेकस्मिन् सुन्दरपुष्पहारे ग्रथित्वा महाकविकालिदासश्शकुन्तलोपदेशाय कण्वकण्ठेऽवतारितवान्।

शुश्रूषस्व...........................४।१८

महाकविकालिदासो वरगुणवर्णने तथोत्सव-चित्रणेऽपि वात्स्यायनानुप्राणितोऽस्ति। रघुवंशमहाकाव्यस्य षष्ठसर्गे वरगुण-वर्णन-प्रसङ्गे कविगुरुः कथयति—

कुलेन कान्त्या वयसा नवेन गुणैश्चतैस्तैर्विनयप्रधानैः,
त्वमात्मनस्तुल्यममुं वृणीष्व रत्नं समागच्छतु काञ्चनेन।

—रघुवंशम् ६।७९

एतेन स्पष्टमस्ति यन्महाकविना स्वकाव्यनाटकेषु वात्स्यायनादनेकप्रेरणाः गृहीताः।

अनुसन्धित्सुः, संस्कृत-प्राकृत-विभाग,
एच० डी० जैन-कालेज, आरा
( मगधविश्वविद्यालय )

# कालिदासस्याप्रस्तुतयोजना

प्राध्यापकः कृष्णमोहन अग्रवालः



कतिपय-मनीषिण उपमानशब्दस्य स्थानेऽप्रस्तुतविधानस्य तथा प्रस्तुत-योजनायाः प्रयोगं कुर्वन्ति। अस्माकं दृष्टावप्रस्तुतविधानाप्रस्तुतयोजनाशब्दयो-रुपमानस्य स्थानेऽप्रस्तुतयोजनाया एव प्रयोगोऽधिक उपयुक्तः प्रतीयते। कारणं स्पष्टमस्ति यत् विधानशब्दस्य 'वर्ण्यवस्तुकृतेऽवर्ण्यवस्तुप्रयोगः, इत्यर्थो व्यवहारविरुद्धः कोषविरुद्धश्च वर्त्तते। अतः उपमानकृतेऽप्रस्तुतविधानं तथोपयुक्तमर्थबोधकञ्च नास्ति यथाप्रस्तुतयोजना।

विवेचकानां कथनमस्ति यदुपमानं स्वस्मिन् यावन्तमर्थं वहति; ततोऽधिकम-र्थमप्रस्तुतयोजना स्वोदरे गृह्णाति। 'उपमान' शब्द एतत्प्रकटयति यद्यत्र तुलनास्ति, तत्रैवास्यप्रयोग उचितो वर्त्तते तथोत्प्रेक्षादृष्टान्ताद्यौपम्यगर्भालङ्कारेष्वेव शक्ष्यति परन्त्वप्रस्तुतयोजना वहिरानेयानि समस्तानि वस्तूनि निगृह्णाति, अधुना विचार्य-माणेऽप्रस्तुतस्य कीदृशं स्वरूपमित्यत्राप्रस्तुतं विशेष्यं, विशेषणं क्रिया वा यत्किमपि स्यात् सर्वमत्रसमाविष्टं जायते।

नवीनसमीक्षापद्धतावुपमेयोपमानयोः स्थानेऽधिकतरः प्रस्तुताप्रस्तुतयोरेव व्यव-हारः क्रियमाणोऽस्ति। उपमेयस्य प्रासङ्गिकं, प्राकरणिकं, प्रकृतं प्रधानञ्च तथोपमानस्याप्राकरणिकम्, अप्रकृतम्, अप्रधानमिति पर्यायास्सन्ति। वस्तुतः प्रस्तुताप्रस्तुतशब्दयोर्नास्ति काचन नवीनता।

अप्रस्तुतयोजनायाः रूपमालङ्कारिकं भवति। सादृश्यमूलकेष्वलङ्कारेषु साम्यायाप्रस्तुतानां योजना क्रियते। एतेषां रूपमुपमानस्य भवति। एतादृशेष्व-लङ्कारेषु द्वयोः प्रधानता भवति। एकस्य तु तुलनीयवस्तुन उपमेयस्य प्राधान्यं भवति द्वितीयस्य तुलनात्मकवस्तुन उपमानस्य तज्जायते। आलङ्कारिकयोजनायाः मुख्ययोरुपमेयोपमानयोरुपमानमप्रस्तुतं वा मुख्यमस्ति। एतदेव कलायाः जीवनं तस्याः मूलं तथा निकषोऽस्ति। एतदेव काव्ये प्रभावमुत्पादयति, प्रेषणीयतामानयति

भावान् विशदान् करोति तथा रस संवर्द्धनं विदधाति। या कविता अप्रस्तुत-शून्या भवति, सा तादृशी हृदयाकर्षिका न भवति, अमन्दानन्ददाने च समर्था न जायते।

अप्रस्तुतयोजनायै लोकशास्त्रस्य निरीक्षण-परीक्षण एव पर्याप्ते न स्तः प्रत्युत तन्मर्मग्रहणे निपुणतावश्यकी वर्त्तते येन तत्र हृदयरसः प्रवाहितस्स्यात्। कविर्यावान् सहृदयो भविष्यति यावाननुभवो भविष्यति, तावती तस्याप्रस्तुतयोजना मार्मिका, हृदयग्राहिणी च भविष्यति तथा सा स्वोद्देश्यसिद्धौ समर्था सम्पत्स्यते।

अप्रस्तुतस्य गुण-द्रव्य-जाति-स्वभाव-क्रियाशक्ति-भेदेनानेकभेदाः भवन्ति। क्वचित् जातेः जातियोगेन, क्वचिज्जातेः द्रव्ययोगेनाथवैकैकस्य द्वयोस्त्रयाणां सर्वेषां वा योगेनात्र वैचित्र्यं लक्ष्यते।

अप्रस्तुतयोजनायामेतदवधेयमस्ति यदुपमेयोपमानयोर्व्यापारे कियदौचित्यमस्ति। यावदधिकमौचित्यं भविष्यति, तावदेव तत्साम्यं समर्थं सम्पत्स्यते, कविकौशलञ्च प्रकटितं भविष्यति। सहैवात्र सादृश्य-साधर्म्य-प्रभावस्य यावद्ध्यानं रक्षितं भविष्यति, तावत्येव प्रेषणीयता, भावोद्बोधकता तथा रमणीयता आगमिष्यन्ति। कविर्यावान् समाधिस्थो भविष्यति, तस्याप्रस्तुतयोजनास्तावत्यः एव मार्मिकाः भविष्यन्ति।

महाकविकालिदासेन स्वग्रन्थेषु सुन्दर्यप्रस्तुतयोजना निबद्धा। तस्य समस्ता-प्रस्तुतयोजनानां विश्लेषणमस्मिन् लघुकाये निबन्धेऽसम्भवमस्ति, परन्तु प्रत्येक-ग्रन्थस्य प्राय एकमुदाहरणद्वयं वा प्रस्तूय कवेः काव्यचमत्कारस्य विश्लेषणं कृतं भविष्यति। भारतीय-समीक्षक-परम्परा महाकविकालिदासमुपमाया आचार्यं मन्वा-नागच्छति। नात्रसंदेहो यन्महाकविर्महताकौशलेन सहोपमानानां प्रयोगं कृतवान्। अत्र वयं द्वित्रैरुदाहरणैरेव स्वकथनस्य स्पष्टीकरणं करिष्यामः।

रघुवंशमहाकाव्ये दिलीपस्य गोचारणव्रतक्रमे कियतामेव सुन्दराप्रस्तुतानां योजना कृता विद्यते। दृश्यताम्—

> निवर्त्य राजा दयितां दयालुस्तां सौरभेयीं सुरभिर्यशोभिः।
> पयोधरीभूतचतुस्समुद्रां जुगोप गोरूपधरामिवोर्वीम्॥
>
> —२।३

महाकवेश्चतुर्भिस्स्तनैर्युक्तायाः प्रचुरपरिमाणे दुग्धदायाः सकलकामनापूर्णकर्त्र्याः नन्दिन्याः अभिव्यञ्जना समीहितास्ति एतदर्थं कविना चतुस्समुद्रयुक्तोर्व्यप्रस्तुतरूपे व्यवहृता। तस्येयमप्रस्तुतयोजना काव्यचमत्कारेण सह वर्णनीयायाः नन्दिन्या अपि साकारं रूपं प्रस्तौति। उर्वी सकल-धन-धान्य-परिपूर्णापि चतुस्समुद्रैर्युक्ता

वर्त्तते। समुद्राः रत्नाकराः कथ्यन्ते। रत्नाकरे ,न केवलमुदकमेव लभ्यतेऽपितु मुक्तामाणिक्यादिरत्नान्यपि तत्र निहितानि भवन्ति। अत इयमप्रस्तुतयोजना नन्दिन्याः दुग्धदरूपस्याभिव्यक्त्या सह कामनापरिपूर्णकर्त्र्याः क्षमताया अप्यभिव्यक्ति करोति। यद्यप्यत्र चेतनस्याभिव्यञ्जनाकृतेऽचेतनस्याप्रस्तुतरूपे प्रयोगोऽस्ति, परन्त्वेतदचेतनमपि सर्वशक्तिमत्तथा सर्वगुणसम्पन्नं वर्त्तते।

इन्दुमतीस्वयंवरप्रसङ्गे महाकवि-लेखनी-प्रसूतमेकमप्रस्तुतं संस्कृतसाहित्येऽद्वितीयमस्ति। इन्दुमती यदा राज्ञां मध्यवर्त्तिमार्गेण चलन्ती यस्य राज्ञोऽन्तिकं प्राप्नोति स ग्रीवायां वरमालाधारणोल्लासेन युक्तो जायते, परन्तु यदैवेन्दुमती तं राजानं विहायाग्रे वर्द्धते, तदैव तस्य राज्ञो मुखं मलिनं जायते। तदग्रवर्ती राजा प्रथम-राजसदृश एवाशोत्फुल्लो भवति, यावत्स्वोपेक्षया कुमारी तमपि विवर्णं न करोति। कुमार्याः राज्ञां मध्य एवं प्रकारेण चलनस्योपमायै समागतोऽप्रस्तुतः—'रात्रौ राजमार्गमुभयतोऽट्टालिका प्रकाशेन चमत्कृता जायते,परन्तु यस्यामग्रे गतायां तस्याः वर्णो मलिनो जायते। राजसदृश्य एवाट्टालिका अपि नैराश्यान्धकारे निमज्जन्ति—

सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः॥

—३।६७

रामराज्याभिषेकसमये कैकेय्या दशरथात्तद्वरद्वयं याचितं यदर्थं राजा दशरथः पूर्वमेव वचनबद्ध आसीत्। एतद्वरद्वयं तादृशमेवासीद्यादृशं पृथिव्याश्छिद्रेभ्यो निःसरत्सर्पद्वयम्—

सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ।
उद्ववामेन्द्रसिक्ता भूर्बिलमग्नाविवोरगौ॥

—१२।५

कविरत्र वरदानकृते वर्षार्द्रौ फुत्कुर्वन्तौ विषि-सर्पावप्रस्तुतरूपे प्रस्तुतवान्। सर्पः स्वयमेव भयङ्करो भवति। परन्तु वर्षार्द्रः सन् स प्राणान्तकारी भवति। कैकेय्या याचितौ वरावपि विषयुक्तसर्पयोर्न्यूनौ प्राणान्तकौ न स्तः। कविनैतैरप्रस्तुतैः प्रकारत्रयस्य व्यञ्जनाः कृताः—

१. वरदाने महाराजदशरथस्य प्राणान्तके स्तः।

२. राज्यस्य शान्तेः सुव्यवस्थायाश्च विनाशके स्तः।

३. सर्पः सन्तति-प्रतीकोऽस्ति। अतो गर्भावस्थायामेव सीतायाः निर्वासनम्।

स्थित्वा तस्मिन् वनचरवधूभुक्तकुञ्जे मुहूर्त्तं
तोयोत्सर्गद्रुततरगतिस्तत्परं वर्त्म तीर्णः।
रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥

—पूर्व० २०

पद्येऽस्मिन् भस्मचित्रितं गजमस्तकमप्रस्तुतं तथा विन्ध्याटव्यां सहस्रधारासु प्रवहशीला रेवा नदी प्रस्तुता वर्त्तते। कालिदासायात्र रेवानद्या उक्तरूपस्य स्पष्टीकरणमिष्टमस्ति। अतएव स भस्मचित्रित-गजमस्तकेन स्पष्टचित्राङ्कनं करोति। गजः श्यामो विद्यते। तस्य मस्तके भस्मना नानाविधं चित्रकृत्यं कृतमस्ति। एषैवस्थितिः विन्ध्योपत्यकायां प्रवहणशीलायाः रेवाया वर्त्तते। उपत्यकायाः भूमिरुच्चावचा विद्यते श्यामवर्णा च। अस्यां भूमौ प्रवाहिता नर्मदा नदी सहस्रधारासु विभक्ता जाता। इदं प्राकृतिकदृश्यं कालिदासो भस्मचित्रितगजमस्तकस्याप्रस्तुतेनाभिव्यक्तं कृतवान्।

विद्युद्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
सङ्गीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम्।
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥

—उत्तर० १.

प्रस्तुतपद्ये मेघः, तत्र व्याप्ता विद्युत्, तत्सहवासीन्द्रधनुश्चित्रम्, मधुरगम्भीरगर्जनम्, पूर्णजलम्, उच्चैराकाशे तत्स्थितिः—एतानि सर्वाण्यप्रस्तुतानि सन्ति। एवमेव अलकाप्रासादाः तेषु विचरणशीलाः कामिन्यः, भवनेष्वङ्कितानि बहुवर्णानि चित्राणि, सङ्गीतार्थं वाद्यमानाः मृदङ्गाः, प्रासादानां चमत्कृता भूमिस्तथा गगनचुम्बिन्युच्चता, एतानि सर्वाणि प्रस्तुतानि सन्ति। अतएवाप्रस्तुतयोजनायां प्रवीणः कविः कालिदासः विद्युद्युक्तं मेघमत्रोपस्थाप्य भवनानां रमणीयतायाः पूर्णामभिव्यञ्जनां कृतवान्। एवमेवालकाङ्के स्थितिसिद्धये कविः स्रस्तगङ्गादुकूलामप्रस्तुतरूपे प्रस्तुतां कृतवान्। तस्यैतदप्यप्रस्तुमलकां प्रौढां नायिकामभिव्यक्तां करोति।

त्वदुपलभ्य समीपगतां प्रियां हृदयमुच्छ्वसितं मम विक्लवम्।
तरुवृतां पथिकस्य जलार्थिनः सरितमारसितादिव सारसात् ॥

—माल० ३।६

उल्लिखितपद्ये वृक्षावलीवेष्टितो नदी-प्रवाहः, पक्षिणां कलरवस्तथा पिपासितः पथिक इति त्रीण्यप्रस्तुतानि सन्ति। मालविका विदूषकस्तथा राजेतित्रीणि प्रस्तुतानि-

सन्ति। महाकविकालिदासो मालविकाप्राप्त्यर्थं व्यथितहृदयमग्निमित्रं पिपासितपथिकरूपे समुपस्थापितवान्। दूरगामी पथिको मार्गश्रमक्लान्तो यदि पिपासाकुलो भवति तदा स यात्रायामेकमपि पदं गन्तुमसमर्थो भवति। अनेनाप्रस्तुतेन महाराजाग्निमित्रस्यावस्था साङ्गोपाङ्गरूपेऽभिव्यक्ता। अग्निमित्र इरावती-धारिण्योः द्वयोर्महाराज्ञ्योस्समक्षं मालविकया स्पष्टं प्रेम कर्त्तुं न शक्नोति। यदा मालविकां प्रति राज्ञः आकर्षणस्य ज्ञानं धारिणी करोति तदा सा कठोरकारागारे तां बन्दीं करोति। अग्निमित्रस्स्वप्रेमिकाया इमां स्थितिं परिज्ञाय तस्याः प्राप्त्यै निराशो भवति। तस्येयमेव स्थितिः श्रान्तपिपासाकुलपथिकस्यास्ति। विदूषकोऽग्निमित्राय धैर्यं ददाति तथा नवीनयोजनया मालविकां कारागृहान्मोचयितुमाश्वासयति। महाकविना पक्षिकलरवः विदूषकस्योल्लिखिताश्वासनजन्यस्थितेरभिव्यञ्जना कृते प्रयुक्तः वृक्षावलीभिराच्छादिता नदीधारा मालविकायाः कारागृहबद्धाया स्थितेरभिव्यक्तयेऽप्रस्तुतास्ति। एवं प्रकारेण महाकविकालिदासोऽस्मिन्नेकस्मिन्नेव पद्ये त्रयाणां विभिन्नानामप्रस्तुतानां योजनां विधाय नाटकस्य प्रमुखपात्रस्य नायकस्य, विदूषकस्य तथा नायिकायाः स्थितेश्चित्रणं करोति।

> अनतिलम्बिदुकूलनिवासिनी बहुभिराभरणैः प्रतिभाति मे।
> उडुगणैरुदयोन्मुखचन्द्रिका हतहिमैरिव चैत्रविभावरी॥
>
> —माल० ५।७

पद्येऽस्मिन् हिममुक्ता तथोज्ज्वलनक्षत्रयुक्ता चैत्रविभावर्यप्रस्तुतमस्ति तथा विघ्नबाधामुक्ता, वैवाहिकसुन्दरवेषभूषासमन्विता मालविका प्रस्तुतं वर्त्तते। महाकविः सूचयति यत् मालविकयाशोकस्य दोहदसम्पन्नतयासौ पुष्पितो जातः। अतएव महाराज्ञी धारिणी मालविकाकृते प्रसन्नाभवत्। इह गौतमस्य चातुर्य्येण मालविका कारागृहान्मोचिता। धारिणी स्वाभीष्टाशोकस्य पुष्पसम्पत्त्या मालविकां प्रति परं प्रसन्ना जाता। सा तस्यै स्थायिनमुपहारं दातुमिच्छति। अतो महाराजेनाग्निमित्रेण सह तस्याः परिणयादतिरिक्तस्स कोऽपि नोपहारो भवितुमर्हति! फलतो धारिण्येव महाराजेनाग्निमित्रेण सह मालविकायाः विवाहस्य संदेशं प्रेषयति। मालविका नववधूस्सती चैत्रविभावरीवाग्निमित्राय प्रतीयते। कालिदासेन चैत्रविभावर्याः योजना सामान्यार्थे न कृता। स प्रकृतेः परं परीक्षकोऽस्ति। स जानाति यच्चैत्रे समागत एव तुहिनपातावरोधो जायते। अतस्तदानीं नभस्स्वच्छं भवति। नक्षत्राणि पूर्णप्रकाशेन सहोदितानि। चन्द्रोऽपि सम्पूर्णां ज्योत्स्नां प्रसारयति। अत उल्लिखितगुणविशिष्टा चैत्रविभावर्येव नववध्वाः मालविकायाः साङ्गोपाङ्गामभिव्यञ्जनां कर्त्तुं शक्नोति। कविनानेनाप्रस्तुतेन निम्नाङ्किताः अभिव्यञ्जनाः प्रस्तुताः—

१. मालविकाया धारिणीकृपापात्रता,
२. विवाहकालीनायास्तस्याः वेशभूषायास्सद्भावः,
३. शाश्वतिकरूपेण तस्याः राज्ञा सह पाणिग्रहणम्,
४. नववधूवेशभूषया तस्यास्सहज-सौन्दर्यवृद्धिः ।

तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरशना,
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् ।
यथाविद्धं याति स्खलितमभिसन्धाय बहुशो;
नदीभावेनेयं ध्रुवमसहना सा परिणता ॥

—विक्रम० ४।५२

अत्राप्रस्तुतं नदी वर्त्तते । प्रस्तुतमत्र महाराजो विक्रमः । विरहवेदनाभिभूतो विक्रमो नद्यामुर्वश्या आरोपं करोति । नद्याः प्रत्येकक्रियायामुर्वश्याः विभिन्नभावनाः क्रियाश्च पश्यति ।

स तस्यास्तरङ्गं भ्रूभङ्गं, पक्षिणां पंक्ति तस्याः रशनां, फेनं वस्त्रं तथा मार्गेषु शिलाखण्डकारणात् तस्याः प्रवाहं प्रियायाः मानं क्रोधं वा कल्पयति । एवं प्रकारेण कालिदासः केवलां नदीमेव नाप्रस्तुतरूपेण समुपस्थापितवान्, प्रत्युत तस्याः समस्ताः प्रतिक्रियाश्चाप्रस्तुतरूपेणोपस्थापितवान् । इयमप्रस्तुतयोजना मानिन्याः नायिकायाः मूर्त्तरूपं प्रस्तौति। कविनैकेनैवाप्रस्तुतसाहाय्येन विरहोन्मत्तमहाराजविक्रमस्य हृदयावस्थायाः पूर्णचित्रमङ्कितम् । प्रस्तुतेऽस्मिन् दूराभिव्यञ्जना कृता । एतदेव कारणमस्ति यद्विरही पुरूरवाः स्वभावनानां दर्शनं नद्याः विभिन्नक्रियासु तथावस्थासु करोति । एकेन प्रकारेण स्वप्रियायाः समस्तहावभावचेष्टास्तस्मै प्रस्तुत-प्रस्तुते परिलक्षिताः भवन्ति—

नद्या इव प्रवाहो विषमशिलासङ्कटस्खलितवेगः ।
विघ्नितसमागमसुखो मनसिशयः शतगुणी भवति ॥

उल्लिखितपद्ये नदीप्रवाहोऽप्रस्तुतमस्ति । प्रियस्नेहश्च तस्मिन् प्रस्तुतमस्ति । महाकविकालिदासः प्रेम-सिद्धान्तं निरूपयन् कथयति यत् प्रियमिलने विघ्नबाधासूपस्थितासु प्रेमवेगः कियद्गुणो वर्द्धते । बाधाजन्य-प्रेमवेगस्याभिव्यञ्जनायै कविर्नदीप्रवाहमप्रस्तुतरूपेण गृह्णाति । तीव्रतया वहन् नदीप्रवाहो यदा मार्गे शिलाखण्डानामागच्छतां समूहैस्संघर्षं करोति तदा तस्य वेगः कियद्गुणो बर्द्धते । यावद्वारं स शिलाखण्डान्याक्रमति, पृष्ठे च परावर्त्तते, तावत्येव तीव्रता तस्मिन्नुत्पद्यते । अतोविषमशिलाभ्यः स्खलनशीलो नदीवेगोऽप्रस्तुतो भूत्वा प्रेम्णः पूर्वावस्थायाः

मूर्त्तरूपमङ्कितं करोति। एतत्सत्यमस्ति यत् वयं यद्वस्तु प्राप्तुमुत्सुकाः स्मः, तद्वस्तुनः प्राप्तौ यावत्यो वाधा उत्पन्नाः भविष्यन्ति, अस्माकमिच्छायास्तीव्रतापि तावत्येव वर्द्धिष्यते । एतस्यैव सिद्धान्तस्याभिव्यञ्जनां कविरुक्ताप्रस्तुतेनाकरोत् ।

काशांशुका विकचपद्ममनोज्ञवक्त्रा सोन्मादहंसरवनूपुरनादरम्या ।
आपक्वशालिरुचिरानतगात्रयष्टिः प्राप्ता शरन्नववधूरिव रूपरम्या ॥

—ऋतु० ३।१

महाकविकालिदासः नववधूमप्रस्तुतरूपे शरदृतुञ्च प्रस्तुतरूपे प्रयुक्तवान् । नववधूस्स्वरञ्जितवेशभूषया, मधुर-नूपुरनादेन, कृशशरीरेण, प्रसन्नमुखेन, लावण्यपूर्णै नेत्रैः, लज्जाशीलतया च जनमानसमाकर्षति । कविरनेनाप्रस्तुतेन शरदो व्यापकसौन्दर्यस्य चित्रणं करोति । शरदृतोः काशांशुकपरिधानस्य, विकसितपद्म-मुखस्योल्लासमत्तहंसमधुररवस्यापक्वशालिधान्यकारणात् नतलज्जालुरम्यरूपस्या-भिव्यक्तिर्भवति । महाकविरत्र नववधूमप्रस्तुतं केनापि विशेषाभिप्रायेणैव प्रयुक्त-वान् । नववध्वां रूपस्य लावण्यस्य वेशभूषायाश्च सन्निवेशो भवति । कविश्शरदृता-वपि तद्गुणानामभिव्यञ्जनां करोति । तद्दृष्टौ शरदृतुरपि विभिन्न विकसितपुष्पाणां धारणवशात् नवीनवेशभूषासम्पन्ना, सरोवरेषु विकसितपद्मकारणाच्च प्रसन्नमुखी भूमौ नतानां पक्वधान्यानां कारणात् लज्जालुः परिलक्ष्यते ।

प्रभिन्नवैदूर्यनिभैस्तृणाङ्कुरैः समाचिताप्रोत्थितकन्दलीदलैः ।
विभातिशुक्लेतररत्नभूषिता वराङ्गनेन क्षितिरिन्द्रगोपकैः ॥

—ऋतु० २।५

पद्येऽस्मिन् वराङ्गनाप्रस्तुतमस्ति । वर्षर्तौ हरितकोमलतृणयुक्ता तथा वीरवधूटी-सुशोभिता भूमिः प्रस्तुतमस्ति । कवेर्वराङ्गनाश्रृङ्गारप्रसाधनेन वर्षाकालीनभूमे-र्दृश्यस्योद्घाटनमपेक्षितमस्ति । अतएव तयाप्रस्तुतयोजनया कविः सर्वप्रथमं वराङ्गनायाः शारीरिकसौन्दर्यस्य विभिन्नप्रसाधनस्यैवमाकर्षकवेशभूषया तृणाङ्कुरै-र्विभूषितवैदूर्यमणिसदृशदूर्वाङ्कुरपरिपूर्णनवीनकन्दलिकापत्रैराच्छादितायाः मसृणवस्त्र-सदृशारुणवर्णवीरवधूटीयुक्तायाः भूमेरभिव्यञ्जनां करोति । एवं प्रकारेण कवि-श्चेतनाप्रस्तुतेनाचेतनप्रस्तुतस्य क्रियाणां प्रतिक्रियाणां स्वरूपस्य चाभिव्यञ्जनां करोति ।

केयमवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या,
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ।

—शाकु० ५।१३

इत्यादिश्लोके शकुन्तलां वीक्ष्य दुष्यन्तहृदयोत्थिताः विचाराश्चित्रितास्सन्ति। दुष्यन्तः शोचति—'इयमवगुण्ठनवती नारी कास्ति ? इदानीमप्यस्याः शरीर-सौन्दर्यं सम्यक्रूपेण प्रस्फुटितं नास्ति। तपोधनमुनीनां मध्ये कुत इयमुत्पन्ना ? इमां वीक्ष्य प्रतीयते यत्पक्वपीतपत्राणां मध्ये प्रस्फुटितो भवन् कोऽपि नवः पल्लवोऽस्ति।

शारद्वतस्य, शार्ङ्गरवस्य तथा गौतम्याः तप एव सर्वस्वमस्ति। एतेन ज्ञायते यत्सर्वे वयोवृद्धाः सन्ति शुष्काः, नीरसाः, पतनशीलास्तथा मृत्योर्निकटवर्त्तिनः शुष्कपल्लवसदृशा, य इदानीं पतितास्तदानीं पतिताः। नवपल्लव एव किसलयः कथ्यते। अस्यां दशायां सः कोमलः कमनीयः, वर्णयुक्तश्चमत्कृतश्च जायते। एतेन द्योत्यते यत् शकुन्तलायाः शरीरं सुन्दरं सुकुमारं नवाभापूर्णञ्चास्ति। कीदृक्सटीकमप्रस्तुतं कविलेखनीप्रसूतं विद्यते। वस्तुतस्तपस्विमध्ये शकुन्तला तादृश्येवास्ति, यादृशः शुष्कपीतपत्रेषु किसलयः।

कालिदासस्स्वाप्रस्तुतानि वातावरणानुकूलानि कर्त्तुं सफलं प्रयासं कृतवान्। यदा शकुन्तलया सह शार्ङ्गरवशारद्वतौ नगरे प्रवेशं कुरुतस्तदा तपोवनवासिनः शारद्वतस्य मानसिकावस्थायाः यद्वर्णनं कालिदासः करोति तदर्थं प्रयुक्तमप्रस्तुतं वस्तुतो वातावरणानुकूलं भावाभिव्यञ्जकञ्च वर्त्तते—

> अभ्यक्तमिव स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तम्।
> बद्धमिव स्वैरगतिर्जनमिह सुखसंगिनमवैमि॥

—शाकु० ५।११

शारद्वतस्य कथनमस्ति यद्यथा स्नातो जनः मर्दिततैलं, पवित्रोऽपवित्रम्, बुद्धः शयानम्, स्वतन्त्रः बद्धं जानाति, अहमपि कोलाहलपूर्णेऽस्मिन् नगरे निवसतः जनान् जानामि। इमानि सर्वाण्यप्रस्तुतानि सामाजिकजीवनाद्गृहीतानि। सामाजिकः प्राणी कविः सामाजिकजीवनपरिधेः वहिर्गन्तुं न शक्ष्यति। अतो यथासम्भव स स्वाप्रस्तुतयोजनां सामाजिकावस्थाया एव ग्रहीतुं प्रयासं करोति।

कुमारसम्भवे वयं प्राप्नुमो यत् कामशरेण समाधिस्थस्य शिवस्य ध्यानं भग्नम्। एकमुहूर्ताय योगीश्वरस्य शिवस्य प्रशान्तचित्त ईषत् चाञ्चल्यस्य सृष्टिर्जाता, तस्याश्चञ्चलताया अभिव्यक्तये कविनोच्चकोटेरप्रस्तुतयोजना कृता—

> हरस्तु किञ्चित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
> उमामुखे बिम्बफलाधरोष्ठे सञ्चारयामास विलोचनानि॥

—कुमार० ३।६७

प्रस्तुतपद्ये शङ्करस्य किञ्चिल्लुप्तं भवद्धैर्यं प्रस्तुतमस्ति, यस्य स्पष्टीकरणायै तादृशं समुद्रं कविरप्रस्तुतरूपे समुपस्थापितवान्, यस्य जलं चन्द्राकर्षणेन किञ्चित्संक्षुभ्यति। समुद्रस्याप्रस्तुतरूपे समुपस्थापने नै तद्ध्वन्यते यत् भगवतश्शङ्करस्य चित्तमत्यन्तं गम्भीरं वर्त्तते, यत्र संक्षोभोत्पादनमतिकठिनमस्ति। तत्र समुद्रसदृशी गम्भीरता लक्ष्यते। योगीश्वरस्य देवाधिदेवस्य महादेवस्य योगमदे प्रशान्तचित्तस्य किञ्चिच्चाञ्चल्यमेतदपेक्षयान्यसुन्दररूपेण न कथितमभविष्यत्। शिवस्य ध्यानसमाहितस्य प्रशान्तचित्तस्येषद्धर्मच्युतिस्तादृश्येवास्ति, यादृशी चन्द्रोदयारम्भे विराट् वारिधिवक्षस उद्वेलतायाः। कविः कियत्या सावधानतया, कियत्या निपुणतया, कियत्या सूक्ष्मतया शिवस्यैतच्चित्तविक्षोभं प्रस्तुतवान्। चन्द्रोदयारम्भिकक्षणेषु महदम्बुराशेरन्तर्यदीषच्चाञ्चल्यं भवति केवलेन तेनैव शिवचित्तचञ्चलताया ईषदाभासो जायते।

महादेवो ब्रह्मचारिब्राह्मणस्य छद्मवेशे समागत्य कठोरतपोरतामुमां तपोविमुखां कर्त्तुं शिवस्य प्रचुरां निन्दां करोति। प्रथममुमा प्रतिवादं करोति परन्तु वाचालश्चपलो ब्राह्मणः कथमपि पराजयं न मनुते, इत्येतद्वीक्ष्योमा ततोऽन्यत्र प्रस्थितुमुपक्रान्ता किन्तु प्रस्थानवेगेन तस्याः स्तनवल्कलं किञ्चिच्छिथिलं जायते। महादेवो निजमूर्त्तिमास्थाय हसन्नुमां गृह्णाति:—

> 'तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
> र्निक्षेपणाय पदमुद्धृतमुद्वहन्ती।
> मार्गाचलव्यतिकराकुलितेव सिन्धुः
> शैलाधिराजतनया न ययौ न तस्थौ॥

महादेवं सम्मुखं दृष्ट्वा कम्पान्विता गिरिराजनन्दिन्यग्रे गन्तुं चरणमूर्ध्वमुत्थाप्यापि नाग्रे गता न स्थितैवासीत्। पार्वत्या अस्याः स्थित्याः स्पष्टीकरणार्थं प्रवाहमध्यवर्त्तिपर्वतावरुद्धवेगा नद्यप्रस्तुतरूपे प्रस्तुता वर्त्तते। पार्वतीहृदये युगपत्प्रवाहितस्य क्रोधस्य, आनन्दस्य लज्जाया एवं सङ्कोचस्य भावा आसन्। किन्तु सा तेषु कतममपि प्रकटयितुं न क्षमाभवत्, नावरोद्धुमपारयत्। सम्मुखस्थितेन महादेवेनोमायाः न केवलबाह्यगत्यामेव बाधासीदपितु तस्या आन्तरिकप्रवाहेऽप्यवरोध उपस्थितोऽभवत्। पर्वतेन सहसावरुद्धा नदी स्वान्तरेवोदग्रप्रवाहा जायते। सेयं स्थितिर्गिरिराजसुताया अप्यासीत्।

अनुसन्धित्सु, संस्कृत-प्राकृत-विभाग,
एच्० डी० जैन कालेज, आरा,
(मगधविश्वविद्यालय)

# मानसभूमिरभिज्ञानशाकुन्तलस्य

प्राध्यापको गदाधरसिंहः

•

महाकविकालिदासस्यामरकृतेरभिज्ञानशाकुन्तलस्य मानसभूमेरुपरि विचारेणात्रगम्यते यत् कवेर्मानसे घटना-वर्णनम्, चरित्र-चित्रणम्, जीवनस्य वरिष्ठमूल्यम्—एवं जीवनस्य महत्त्वपूर्णसमस्या उपस्थिता आसन्, यत्सामान्यीकरणं कृत्वा कालिदासस्तन्नाटकं प्रणीतवान् । सः 'अहम्'-जीवनोपर्याध्यात्मिकजीवनस्य ग्रन्थेरुद्घाटनं कृत्वा शाश्वतिकजीवनमूल्यानामवतारणां कृतवान् । अचेतने प्रच्छन्नानामगणितसम्भावनानां विश्वकल्याण-हेतवे मङ्गलसूत्राणां गम्भीरानुभूतीनां जीवनशक्तेरनुपमशृङ्खलानामेवं जगज्जीवनयोरनेकद्वन्द्वानां सहजरूपेण तेनोद्घाटनं कृतम् । शकुन्तला-प्रणयन-काले प्रेमसौन्दर्ययोः, त्यागवासनयोः, आसक्ति-विरक्त्योः आशा-नैराश्ययोः, प्रकाशान्धकारयोः, प्रेयश्श्रेयसोः, मङ्गलामङ्गलयोः, चञ्चलता-प्रौढतयोश्च विस्तृतायामाः कविमानसे वर्त्तमाना आसन्, येषां क्रियाशीलतैवोत्कनाटके प्रतिफलिता जाता । प्रकाशनायाकुलाः जीवनस्यानन्त शक्त्यः कविमानसभूमौ समवेताः सन्ति । अतश्शकुन्तलायां धर्मस्याधर्मोपरि, प्रेम्णोवासनोपरि तथा तपस्यायाः भौतिकशक्त्युपरि विजयाः जाताः ।

शाकुन्तलस्य प्रथमदृश्य एव दुष्यन्तरूपे प्रकम्पन-रूपा वासनायाति । सा च क्षणमात्र एव तत्रत्यां शान्तिं समापयति । समस्ता प्रकृतिस्तदातङ्केन चीत्करोति । वासना तदानीं स्वचरमोत्कर्षे तिष्ठति, यदा साश्रमस्यैवां निर्दोषकन्यामभिभवति । अत एव धर्माधर्मयोः संघर्ष उदेति ।

शाकुन्तलस्य प्रारम्भः कृष्णमृगमनुसरतो नृपस्य दुष्यन्तस्यागमनेन भवति । राज्ञ आगमनेनाश्रमस्य शान्तवातावरणमुद्वेलितं भवति । आश्रमस्य तपस्विनो राजानं मृगमारणान्निवारयतः । प्रजावत्सलो नृपस्तयोरिमां वार्त्तां स्वीकरोति तथा शास्त्रनियमानुसारमस्त्रं त्यक्त्वाश्रमे प्रविशति । तदानीं महर्षिकण्व आश्रमे नास्ति । स हि शकुन्तलाया अनिष्ट-निवारणार्थं सोमतीर्थं गतोऽस्ति । दीर्घकालं

यावत्कण्वानुपस्थितौ-तत्रानेकघटनाचक्रस्य जन्मैव महाकविलक्ष्यमस्ति। आश्रमे दुष्यन्तप्रवेशं समस्ता प्रकृतिः विरोधरूपे गृह्णाति। शाकुन्तले तु प्रकृतिर्मानव-मनोवृत्तिस्वरूपैवास्ति, नतु जडरूपा।

महाकविकालिदासो यस्य पक्षस्य विजयं समीहते तमसो पूर्णबलेन सहोपस्था-पयति। अधर्मोत्र चरमोत्कर्षे वर्त्तते। शकुन्तलाश्रमधर्मनियमान् परित्यज्य एकं प्रेमपत्रं दुष्यन्तसमीपे लिखति। सा जानाति यत्तस्या इदं कार्यमनैतिकमस्ति। यतः धर्मशास्त्रानुसारं कन्यादानाधिकारी पितैव जायते। प्रियम्वदैतत्तथ्यं स्वीकरोति—

"अज्जधम्मचरणे वि परवसो अअं जणो"
आर्या गौतम्यपि नैतत्समर्थनं करोति—
णावेक्खिओ गुरुअणो इमाए तुए पुच्छिदो ण बन्धुअणो,
एक्कक्कमेव्व चरिए भणामि किं एक्कमेक्कस्स ५।१६

शकुन्तला स्वसीमारेखया निश्चितमेव परिचिता विद्यते, किन्तु तदक्षणो-न्मदेन यौवनेन तदीया बुद्धिराक्रान्ता वर्त्तते। अत्र धर्मः स्पष्टं पराजितो दृश्यते। तदानीञ्च स पराकाष्ठां व्रजति, यदा दुष्यन्तः शकुन्तलामालिङ्ग्य तदधरपानं समीहते।

अतः परं दुर्वाससश्शाप आयाति। शापेऽस्मिन् कालिदासस्य मौलिकी कल्पना सन्निहितास्ति। यतः महाभारतस्य 'शाकुन्तलोपाख्याने' शापप्रसङ्गो नायाति। एतद्रूपकं काव्यस्य नग्नसत्यं प्रकटीकरोति। गुप्तप्रेम तादृशोऽभिशापोऽस्ति, यत्प्रकाशमायात्येव। पापस्य परिणामः कदापि मङ्गलकारी न भवति। अनयैव वासनयाभिभूता शकुन्तला भारतीयमहाधर्मातिथिसत्कारावहेलनां करोति। इयमवहेलनाप्यधर्मविजयस्यैका शृङ्खला विद्यते। किन्तु स सदैव विजयी न स्थास्यति। तस्मिन् वज्रपातोऽवश्यं भावी भवति। कामो यदा धर्मविरुद्धाचरणं करोति, तदान्ते स एवमेवाभिशप्तो भवति। दुर्वाससश्शापः शकुन्तलारूपाधर्मे वज्रपात एवास्ति। कुमारसम्भवस्य मदन-दहन-प्रसङ्गेऽपि तदेव रहस्यमन्तर्हित-मस्ति।

शकुन्तला वारम्वारं विबोधिताप्यस्माद् व्यापारान्न विरराम। सर्वप्रथमं तु शकुन्तलायाः प्रियमृगस्य दीर्घापाङ्गस्यास्मिन्प्रसङ्गे ग्रहणं भवति। नवमालिका-कुञ्जे दुष्यन्तशकुन्तलयोः केलिपरयोः सन्निकटे स तत्पुत्रकृतको मृगो गच्छति। दुष्यन्तस्तं प्रिया-प्रियं मृगं जलं पाययितुमिच्छति। परन्तु प्रकृतिपुत्रोऽसौ तथा न करोति। स तद्दत्तजलमविश्वस्य तन्न पिबति। तत्र दीर्घापाङ्गोपस्थापने कवेरेकं

लक्ष्यमस्ति। वस्तुतः स स्वमातृतुल्यां शकुन्तलां सतर्कां कर्त्तुमेवागत आसीद्यन्निरीह-प्राणि-घातकोऽयमाखेटे न विश्वसनीयो नृप इति। परन्तु शकुन्तलया स्वस्वप्न-संसार-विमुग्धया नैतद्बुद्धम्।

वारमेकं पुनरपि दीर्घापाङ्गस्तस्याः पतिगृहगमनकाले समागच्छति। स च तदानीं तदञ्चलं गृहीत्वा कर्षति। शकुन्तला मार्गावरोधिनं तं दिदृक्षति तदा कण्वः कथयति—

> यस्य त्वया व्रणविरोपणमिङ्गुदीनां
> तैलं न्यसिच्यन्मुखे कुशसूचिविद्धे
> श्यामाकमुष्टिपरिवर्द्धितको जहाति
> सोऽयं न पुत्रकृतकः पदवीं मृगस्ते।

महाकविनात्रापि दीर्घापाङ्ग उल्लिखितोद्देश्यसिद्ध्यर्थमेवोपस्थापितः।

शकुन्तला सर्वैः सर्वाभिश्च सह मिलित्वा प्रस्थानं करोति। परन्तु तदुच्चावचभूमौ तस्य चरणौ साधु न पततः स्म। यतोऽश्रुभिस्तदक्षिण्यवरुद्धे सञ्जातेऽभवताम्। एषापि, मन्ये, अनिष्टसूचनैवासीत्।

इदानीमेवैकोऽन्यश्चक्रवाक्याः प्रसङ्ग आयाति। शकुन्तला स्वसखीः प्रति वक्ति—

णालिणी पत्तन्तरिदं वि सहअरं अदेक्खन्ती आदुरा चक्कवाई आरडदि दुक्करं अहं करेमि त्ति तक्केमि।

एतदुत्तरं ददती कथयत्यनुसूया—

> एसा वि पिएण विणा गमेइ रअणिं विसाअदीहअरं
> गरुअं पि विरहदुक्खं आसाबन्धो सहावेदि ४।१६

चक्रवालस्येयं घटना दैवी सूचना वर्त्तते यच्छकुन्तलयापि दीर्घकालं यावत् विरहिण्या भाव्यम्।

शकुन्तला दुष्यन्त-राजसभायामुपस्थिता भवति। कण्वस्तु तां पतिगृहं संप्रेष्य निश्चिन्तो जातः। परन्तु शकुन्तलायाः पापस्य फलमत्र ताण्डवं कुर्वदास्ते। या शकुन्तला महता स्नेहेनाश्रमे पालितासीत्, सेदानीं महदपमानिता जाता। शकुन्तलैतत्सर्वं वीक्ष्यातिव्याकुला भवति। शकुन्तला-हृदयं भीषणापमानव्रणेन विदीर्णं जायते। दुष्यन्तः शकुन्तलया सह समग्रनारी जातौ "अशिक्षितपटुत्वारोपणं" करोति। सा केवलमेकवारं दुष्यन्तमनार्यमुक्त्वा विरमति। शकुन्तला राजसभायाः

निर्गच्छति । इत एव शकुन्तलायाः प्रायश्चित्तस्य समय आयाति । अद्य तस्याः समस्ता आशाः धूलौ निलीनाः ।

दुष्यन्तस्य दशा तु शकुन्तलापेक्षयाऽपि दीना वर्त्तते । यदि स स्वप्रियायाश्चित्रं निर्माय तस्मिन् स्वमनोविनोदं चेष्टते, तदा विधिस्तदपि न सहते—

> प्रजागरणखिलीभूतस्तस्याः स्वप्ने समागमः,
> वाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ६।२२

एतदतिरिक्तं महाराज्ञ्याः वसुमत्याः भयेन दुष्यन्तः तस्याः समक्षं शकुन्तलायाः नामग्रहणेऽपि स्वतन्त्रो नास्ति । कवेर्मानसभूमेरत्र पूर्णोद्घाटनं भवति । तस्य मनसः समस्त-भावानामनुभावनमत्र भवच्चलति ।

अन्ते कविः पुनः मारीचाश्रमे दुष्यन्त-शकुन्तलयोः मिलनं कारयति । एकदैतादृश एव तपोवने तयोर्मिलनमभूत् । परन्त्वेतत्ततो भिन्नमस्ति । तत्तु चौर्यमिलनमासीत्, तच्च प्रणयिनोर्मिलनमासीत् । तन्मिलनं यत्राभूत् तद्भूतलतपोवनमासीत् । अद्यतनं मिलनं यत्र जातम्, तत्स्वर्गतपोवनमस्ति ।

एवं प्रकारेण महाकविकालिदासेन शाकुन्तले भूस्वर्गयोर्मेलनं कारितम् । अस्मिन् नार्यास्तस्य शाश्वतधर्मस्य प्रतिपादनमस्ति, यः व्यक्तिसंकुचितसीमायां नाबद्धो भूत्वा पारिवारिक-सामाजिकजीवनस्य तद्विस्तृतक्षेत्रस्य स्पर्शं करोति, यस्य सम्बन्धः लोककल्याणकारिस्वरूपेणास्ति, प्रेम स्थूलताया ऊर्ध्वमुत्थाय नैतिकसौन्दर्यस्य सहजां स्वाभाविकीं दीप्तिं प्राप्नोति तथा यत्र वासनायाः ज्वालामुखी प्रेमगङ्गा-यमुनयोः स्पर्शमधिगत्य शान्ता शीतला च जायते । अर्थ-कामयोराधाररेखायै धर्म एव शीर्षबिन्दुरस्ति । व्यक्ति-समाजयोः गरिम्णोऽक्षुण्णतायै तथा प्रकाशमय-मोक्षपथविस्ताराय त्रयाणां समन्वय आवश्यको वर्त्तते ।

कालिदासस्य 'शाकुन्तलम्' कामकठोरतायाः स्थाने प्रेमकोमलतायाः, स्वार्थ-सिद्धेः स्थाने सर्वात्मसमर्पणस्य, उच्छृङ्खलतायाः शिलान्यासे मर्यादाप्रासादस्थापनस्य, विराडायोजनमस्ति । शार्ङ्गरवमुखेन कविना यस्य नग्नसत्यस्याभिव्यक्तिः कारिता, तस्यावश्यकताद्यतनस्वतन्त्रभारतीयनवयुवक-नवयुवतीकृते नितान्त-मावश्यकी वर्त्तते—

> अतः परीक्ष्य कर्त्तव्यं विशेषात् संगतं रहः ।
> अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥

—५।२४

●

# सम्पादकीयम्



मगधविश्वविद्यालयोपकुलपतिकर्नलजवारहुसैनसाहवमहोदयानां तथा आरास्थ मगधविश्वविद्यालयीय हरप्रसाददासजैन कालेजस्य प्राचार्य डॉ० परमहंसराय महोदयानां सत्कृपया प्रेरणया च 'मागधस्य' संस्कृत-प्राकृतविभागीयषाण्मासिक-शोधवाङ्मयस्यैष प्रथमोदयः पाठकानां समक्षं प्रस्तुतोऽस्ति। कतिपयवर्षपूर्वेऽस्य एवैष विचारश्चलित आगच्छन्नासीत्, यदस्माकं कालेजस्य संस्कृत-प्राकृतविभागादेकस्यानुसन्धानविषयकसंस्कृतपत्रस्य प्रकाशनं भवेत्। गतद्वाभ्यां वर्षाभ्यामेतद्विभागे संस्कृत-प्राकृतयोर्विभिन्नविषयेऽष्टशोधार्थिनोऽन्वेषणं कुर्वन्तस्सन्ति। एतेष्वनुसन्धित्सुषु त्रयाणां शोध-प्रवन्धाः सम्पन्नाः वर्त्तन्ते तथा विश्वविद्यालयनियमानुसारमवधिमध्य एव ते प्रस्तुताः भविष्यन्ति। अतस्संस्कृत-साहित्य-प्रणयिनां डॉ० श्रीपरमहंसराय-महोदयानां प्रेरणाऽसीद्विभागीयानुसन्धित्सूनां सहयोगेन शोधात्मकं संस्कृतपत्रमवश्यमेव प्रकाशितं स्यात्।

गतत्रिभ्यो वर्षेभ्योऽस्माकं विभागे त्रयाणां प्राध्यापकानामावश्यकता नितान्तमनिवार्यासीत्। अतो विभागीयकार्याधिक्यकारणाद्वयं शोधात्मक-संस्कृत-पत्र-प्रकाशने कृतसंकल्पाः नाभवाम। इदानीं वर्त्तमानोपकुलपतेः कृपयास्माकं विभागे द्वयोः प्राध्यापकयोः प्राप्तिर्जाता। एकस्यचावश्यकतेदानीमपि वर्त्ततेऽवशिष्टा। अस्मासु विश्वासो विद्यते यदस्माकं नीति-न्याय-परायण उपकुलपतिरस्मद्विभागीयकार्याणां वाहुल्यं वीक्ष्यापरैकसहयोगिप्रदानेन कृतार्थयिष्यति। नवसहयोगिनोरहमभिनन्दनं करोमि। स्वागतञ्च तयोः, ययोः पदार्पणेनास्माकं पत्रप्रकाशनस्य सुषुप्तो विचारो मूर्त्तिमान् जातः। नवसहयोगिनौ श्रीरामनाथपाठकः 'प्रणयी' तथा श्रीकृष्णमोहन अग्रवाल उभावपि स्वस्वविषयस्य विद्वांसौ सफलशिक्षकौ च स्तः। श्रीपाठकः स्वग्रन्थ-विषयकागाधपाण्डित्येन, काव्यप्रणयनस्यापूर्वक्षमतया तथा संशोधन-सम्पादन-प्रतिभया स्वंप्रत्यस्मानाकर्षति। तरुणोऽग्रवालमहोदयोऽपि स्वालोचनात्मकसूक्ष्मदृष्ट्यास्मान् प्रभावयति।

सागरविश्वविद्यालयस्य संस्कृत-विभागात् निर्गच्छन्त्याः 'सागरिका' याश्शोध-पत्रिकायाः वाराणसेयसंस्कृतविश्वविद्यालयस्य च 'सारस्वतीसुषमा' नाम्न्याः पत्रिकाया आलोकनं विधायास्माकं समीहासीद् यदस्माकं मागधम्' शोधग्रन्थरूपेणोदितं स्याद्यस्य शतद्वयपृष्ठेषु कस्याप्येकस्यैव विषयस्य शोधसामग्र्यस्माभिः प्रस्तुता स्यात्। परन्त्वार्थिककाठिन्यवशात्तथा न जातम्। अस्माकमेष संकल्पो वर्त्तते यन्मागधस्य शोध-सामग्री शोधात्मिका भविष्यति तथैतद्वाङ्मयं केनाप्येकेन कविना ग्रन्थेन विषयेन वा सम्बद्धं भविष्यति। कतिपयमित्राणामेष परामर्शोऽस्ति यत् 'मागध'स्य प्रत्येकोदयस्य संस्करणद्वयं प्रकाशितं स्यात्। प्रथमसंस्करणं संस्कृते स्यात्, तथा तदीयं द्वितीयं रूपान्तरं राष्ट्रभाषायाम्। राष्ट्रभाषा-संस्करणेनाधिकाधिकजिज्ञासवो लाभान्विताः भविष्यन्ति तथा तस्याश्शोधसामग्र्या अधिक उपयोगो भविष्यति। यद्युपकुलपते-रुदारतया विश्वविद्यालयात् पूर्णार्थिकसहयोगः प्राप्तो भवेत् तदा वयं प्रत्येकोदयस्य द्वे संस्करणे प्रकाशयितुं शक्नुमः। अस्माकमेतत्स्वीकारे मनागपि नास्ति संकोचो-य'न्मागध'स्य स्थानं वर्त्तमान-समस्त-संस्कृतपत्र-पत्रिकासु गणनीयं भविष्यति। वयमेतदर्थं पूर्णसावधानाः स्मो यत् 'मागधे' व्यर्थाडम्बरपूर्णा नैकापि रचना स्थानं लभेत। 'मागधं' सीमितपृष्ठेषूदितं स्यात्परमेतत्प्रत्येकपङ्क्तिश्शोधार्थिभ्यो महत्त्व-पूर्णा भवेत्।

मागधस्यैष प्रथमोदयः 'कालिदासानुशीलन-नाम्ना प्रकाश्यमानोऽस्ति। एवं द्वितीयोदयः 'महाकविबाणभट्टानुशीलन' नाम्ना प्रकाशितो भविष्यति। कालेजस्य बाणभट्ट-परिषदो व्यवस्थापिका समितिः प्रथमोदयमेव 'बाणभट्टानुशीलन'-नामानं कर्त्तुं समीहते स्म, परं 'शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ' ( उत्तरमेघः ४७ ) पद्यानुसारं कालिदासस्य मानसपुत्रस्य यक्षस्य शापमोचनं नवम्बरमासस्य त्रयोविंशतितारिकायामस्मिन् वर्षे जातम्। अतएव कालिदासजयन्त्याः स्मारक-रूपेणैष प्रथमोदयो महाकविकालिदासविषयक एव प्रकाश्यते।

## महाकविकालिदासस्य समयनिर्धारणं तथा कृतिपरिचयः

महाकविकालिदासस्य जन्मस्थानस्य तथा जीवनपरिचयस्य विषये प्रामाणिक-सामग्र्या अभावोऽस्ति। डॉ० कीथ-प्रो० कल्ला—डॉ० मिराशी—प्रभृतिदशाधिक-विद्वद्भिः कालिदासस्य जन्मस्थानविषये जीवनवृत्तविषये च विचारः कृतः। अतोऽस्मिन्विषये नवीना विचारणा प्रायोऽसम्भवा वर्त्तते। महाकवेः समय-निर्धारण-सम्बन्धे साम्प्रतमपि मान्यताद्वयमागच्छदस्ति। प्रथमा मान्यता तं ख्रीष्टाब्देः पूर्वं प्रथमशताब्द्याः मनुते। द्वितीया मान्यता च तं गुप्तकालीनं स्वीकरोति। महाकवि-

कालिदासकृतीनामालोडनेनास्माभिः कविस्थितिर्गुप्तकालीनैव ज्ञायते। भारताच्छकोन्मूलकस्य, विक्रमादित्योपाधिधारकस्य तथा स्वपूर्ववर्त्तिमालवसंवत्सरस्य विक्रम संवत्सरनाम्ना प्रचारकस्य द्वितीयस्य सम्राजश्चन्द्रगुप्तस्य समुन्नतसाम्राज्यकालएव कविस्थितिः सिद्धा भवति। भारतीयेतिहासस्यास्मिन्नेव स्वर्णयुगे महाकविकालिदासेन स्वीकीर्त्तिकौमुद्याः प्रसारः कृतो भवेत्। एतन्मतसमर्थने कथ्यते यत् कविना चन्द्रगुप्तपुत्रस्य कुमारगुप्तस्य जन्मलक्ष्यं कृत्वा कुमारसम्भवस्य रचना कृता। 'गुप्' धातोः प्रयोगो रघुवंशस्य कतिपयेषु ( १।११, १।५५, २।३, २।२४, ४।२० तथा ४।२६ ) श्लोकेषु कृतः। एतत्प्रयोगाधिक्यमपि कविं गुप्तकालीनं प्रमाणी करोति। कवेर्भाषाया गुप्तकालीनाभिलेखानां मुद्राणां च भाषया सहासाधारणं साम्यमस्ति। गुप्तसम्राड्मुद्रानिर्मितमयूरपृष्ठासीनस्य कार्त्तिकेयस्य वर्णनं कालिदासेनानेकशः कृतम्। विक्रमोर्वशीयनाटकस्य पुरूरवा एव विक्रमनाम्नाभिहितः। यद्येतस्य नाटकस्याध्ययनं 'देवीचन्द्रगुप्तस्य' प्रकाशे कृतं स्यात्तदोर्वशी ध्रुवदेवी प्रतीता भवति। चन्द्रगुप्तद्वितीयस्योपाधिः विक्रमादित्योऽथवा विक्रमाङ्क आसीत्। डॉ० वासुदेवशरणअग्रवालेन स्वैकस्मिन्निबन्धे कथितम्—'मालवसौराष्ट्रयोर्विजयोपलक्ष्ये चन्द्रगुप्तो रजतमुद्रानिर्माणं कारितवान्, यासु मुद्रासु परमभागवतमहाराजाधिराजश्रीचन्द्रगुप्त विक्रमादित्यस्य.......... श्रीगुप्तकुलस्यमहाराजाधिराजश्रीचन्द्रगुप्तविक्रमाङ्कस्य लेख उत्कीर्णोऽस्ति[2]।

अस्यैव राज्ञ उपाधिश्शकारिरासीत्। अयं पाटलिपुत्राधीश्वरो भवन्नुज्जयिनी पुराधीश्वरोऽप्यासीत्। कालिदास-वर्णित-रघु-दिग्विजयसीमाः दक्षिणदिशि समुद्रगुप्त-दिग्विजयेन तथोत्तरदिशि चन्द्रगुप्तदिग्विजयसीमया-समतामावहन्ति। अतएवैतिहासिकप्रकाशे स्पष्टमेतद्यत् कविस्समुद्रगुप्तस्य चन्द्रगुप्तस्य विजयस्य समाहारवर्णनमेव रघुदिग्विजयरूपेण कृतवान्। इतिहासेन सिद्धमेतद्यत् स हूणेरानी-नरेशबहरामगोरेण पराजितः वंक्षुनद्याः घाट्यां निवासं कृतवान्। महरौलीस्तम्भलेखेनापि प्रकटमस्ति यत् चन्द्रगुप्तद्वितीयोवङ्गे शत्रून् विनाश्य पञ्चनदनदीरुत्तीर्णवान् तथा वंक्षुनद्यास्तटे हूणान् पराजितवान्[3]। अतएव सिद्धमेतद्यत् कविसमयो द्वितीयचन्द्रगुप्तस्य राज्यकालोऽस्ति। रघुवंशे निरूपितस्य रघोरजस्य च तुलना समुद्रगुप्तेन चन्द्रगुप्तद्वितीयेन च सह सम्भाव्यते। कविना यस्य समाजस्य राज्यव्यवस्थायाश्च चित्रणं कृतम्, तन्निश्चितं गुप्तकालीनमस्तिः—

---

१. कालिदासः—चन्द्रबलीपाण्डेयः मोतीलाल बनारसीदाससंस्करणम्, पृ० १३-१४।
२. नागरी-प्रचारिणी-पत्रिका काशी विक्रमाङ्कम्; पृ० २६६।
३. महाकविकालिदासः—रमाशंकर त्रिपाठी, चौखम्बा संस्करण, पृ० १३

प्रशमस्थितपूर्वपार्थिवं कुलमभ्युद्यतनूतनेश्वरम् ।
नभसा निभृतेन्दुना तुलामुदितार्केण समारुरोह तत् ॥

—रघु० ८।१५

प्रस्तुतपद्ये वर्णितोऽजश्चन्द्रगुप्तो द्वितीयो रघुश्च समुद्रगुप्तरूपेण प्रतीयन्ते । येन प्रकारेण समुद्रगुप्तप्रतापश्चन्द्रगुप्तसमक्षं मन्दोजातस्तथैव रघुप्रतापोऽजसमक्षं तेजोविहीनो जातः ।

स्व० श्री चन्द्रवली पाण्डेयेन रघुवंशे गुप्तवंशस्यच्छायादर्शनं कृतम् । स लिखितवान् यत् "रघुवंशं गुप्तवंशस्यालङ्कृतिरस्ति नानुकृति":[1]—

कियन्त आलोचकाः गुप्तनरेशानां सम्बन्धे तर्कमिमं समुपस्थापयन्ति यद्गुप्त-नरेशानां सम्बन्धः पाटलिपुत्रेणास्ति, नोज्जयिन्याः । ऐतिहासिक प्रमाणाधारेण चन्द्रगुप्तद्वितीयस्य सम्बन्धः पाटलिपुत्रेण सहोज्जयिन्यापि सिद्ध्यति ।

डॉ० राधाकुमुदमुखर्जी लिखितवान्—"चन्द्रगुप्तद्वितीयस्याभियानैरेवं विज-यैरेतत् स्पष्टं जायते यत् पूर्वमालवस्य विदिशानगरेण तस्य सम्बन्ध आसीत् । यथा वयं पूर्वमेव दृष्टवन्तो यत् तेन सह स्वसम्बन्ध-प्रदर्शकैः कनाडीप्रदेश-शासकैः तस्य वर्णनं पाटलिपुत्राधीश्वरेण सहोज्जयिनीपुराधीश्वररूपेण कृतम् । उज्जयिन्या सह तस्य सम्बन्धः परम्परागतशकारि-विक्रमादित्येन सह तस्याभिन्नताया अनुमोदनं करोति ।

कालिदासो मालविकाग्निमित्रे सूत्रधारमुखेन निम्नलिखितपद्यस्य पाठं कारितवान्—

पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः ॥

—१।२

महाकवेरुक्तपद्यस्य भावस्सिद्धसेनस्य ( वि० सं० पञ्चमी शताब्दी ) षष्ठ्याः द्वात्रिंशिकायाः कतिपयेषु पद्येषु प्राप्यते । द्वात्रिंशिकाकारः सिद्धसेनो विक्रमा-दित्यस्य नवरत्नेषु निरूपितः क्षपणकोऽस्ति । अतस्सिद्धसेनस्योक्तरचनायाः प्रभावः कालिदासोपरि कालिदासस्योक्तपद्यस्य प्रभावः सिद्धसेनोपरि वा वर्त्तते । सिद्धसेनस्य पद्यानि निम्नाङ्कितानि सन्ति—

पुरातनैर्या नियता व्यवस्थितिस्तत्रैव सा किं परिचिन्त्य सेत्स्यति ।
तथेति वक्तुं मृतरूढगौरवादहन्न जातः प्रथयन्तु विद्विषः ॥

—६।३ त्रिंशिका

---

१. कालिदासः—चन्द्रवली पाण्डेयः, मोतीलाल बनारसीदास संस्करण, पृ० ७७

बहुप्रकाराः स्थितयः परस्परं विरोधयुक्ताः कथमाशु निश्चयः।
विशेषसिद्धावियमेव नेति वा पुरातनप्रेमजलस्य युज्यते॥

६।४ त्रि०

जनोऽयमन्यस्य मृतः पुरातनः पुरातनैरेव समो भविष्यति।
पुरातनेष्वित्यनवस्थितेषु कः पुरातनोक्तान्यपरीक्ष्य रोचयेत्॥

—६।५ त्रि०

अत एव कालिदाससमयश्चन्द्रगुप्तद्वितीयस्य राज्यकालः ( ई० सन् ३७५-४१३ ई० )।

## 'कृति'-अभिशंसनम्

कालिदासः संस्कृत-साहित्यस्य ज्वलन्दीपस्तम्भोऽस्ति। तस्य रचनासु राजनीतेस्तत्कालीनधार्मिक-सांस्कृतिकरूपस्य, शास्त्रविज्ञानस्य कलायाश्च सङ्केत उपलभ्यते। वैदर्भ्याः शैल्याः कविःकालिदासस्स्वरचनासु बाह्यालङ्कृतेरारोपस्यावश्यकतान्न ज्ञातवान्। अस्य रघुवंशकुमारसम्भवे द्वे महाकाव्ये मेघदूततुंसंहारे द्वे गीतिकाव्ये ( तथाकथितखण्डकाव्ये ) एतच्चत्वारः काव्यग्रन्थास्सन्ति। मालविकाग्निमित्रम्, विक्रमोर्वशीयमेवमभिज्ञान-शाकुन्तलञ्चेति त्रयो नाटकग्रन्थास्सन्ति। कुमारसम्भवे कवेः यौवनस्योद्दामप्रणयभावना अङ्किताः सन्ति। एतस्याष्टौ सर्गाः महाकविकालिदासप्रणीताः मन्यन्ते। अस्मिन् शिवपार्वत्योः मानवीयरूपेण प्रतिष्ठा वर्तते। सौन्दर्यस्य, जीवनसम्भोगस्यैवं प्रणयस्य मार्मिकचित्राणि काव्येऽस्मिन्नङ्कितानि सन्ति। रघुवंशमहाकाव्यमेकोनविंशसर्गेषु निबद्धं वर्त्तते। अस्मिन् दिलीपादारभ्याग्निवर्णपर्यन्तनृपाणां चरित्राङ्कनं कृतमस्ति। एकवंशस्य समस्तानां राज्ञामितिवृत्तान्याकल्प्यैकसूत्रे महाकाव्योचितगरिमा प्रदत्तोऽस्ति। वस्तुत एका चित्रशालास्ति, यस्यामनेकनृपाणां चित्राण्यस्माकं सम्मुखे प्रस्तूयन्ते। दिलीपस्य, रघोरजस्य रामस्य च चरित्रेष्वस्माकं ध्यानमधिकं गच्छति। वस्तुतोरघुवंशस्येतिवृत्तमेकानिश्चितादर्शभूमौ निर्मितमस्ति। अस्य वंशस्य समस्तराजानामादर्शः प्रतीकरूपेण पाठकानां समक्षं प्रस्तुतो भवति। एतत्सत्यं यत् रघुवंशस्य पात्राण्यादर्शभूतान्यपि न यथार्थ-दूराणि सन्ति। काव्यस्येतिवृत्तं गतिशीलमस्ति। उदात्तचरितान् काव्यव्यापारस्य विस्तृतधरातलेऽङ्कितान् कृत्वा कविस्स्वसूक्ष्मप्रतिभायाः परिचयं दत्तवान्। यत्र कविर्वस्तुव्यापाराणां वर्णनं करोति तत्रापि कथासूत्रं न त्यजति, येन भावप्रवणतायां रसानुभूतौ च न्यूनता नायाति। रघुवंशेऽप्यालम्बनोद्दीपनरूपेण प्रकृति-चित्रणं प्राप्यते। अप्रस्तुतविधानेन कविः काव्यवातावरणसंयोजनैः पूर्णसफलतां प्राप्तवान्। कविः प्रस्तुतमहाकाव्ये राजन्यवर्गस्य,

शीलस्य, शौर्यस्यैश्वर्यस्य च पूर्णाभिव्यक्ति कृतवान्। रसस्य, भाषामाधुर्यस्यैस्वं प्राञ्जलताया तथालङ्काराणां साधुप्रयोगदृष्ट्या रचनेयमत्यन्तरमणीयास्ति।

ऋतुसंहारेणैकनविधायाः जन्म दत्तम्। काव्येऽस्मिन् ग्रीष्मस्य, वर्षाणां शरदो, हेमन्तस्य, शिशिरस्य, वसन्तस्य च चित्रणमस्ति। प्रत्येकर्तुमादायैकस्सर्गो निबद्धोऽस्ति। ऋतूनां साङ्गोपाङ्गवर्णनशैलीयं कालिदासस्यानुपमा विद्यते। अस्मात्पूर्वमादिकविना वाल्मीकिना वर्षाणां शरदो हेमन्तस्य तथा वसन्तस्येति-चतुर्णामेवर्तूनां चित्रणं कृतम्। परन्तु महाकविना काव्यात्मरूपं प्रदाय षण्णामृतूनां सर्गबद्धचित्रणं कृतम्। निश्चयत एतदृतुसंहाराधार एव 'बारहमासा' सदृशानां राष्ट्रभाषाकाव्यानां परम्परा प्रारब्धा। 'चैती-सावनी' नाम्न्योः लोकगीत्योः परम्पराया आदिस्रोतोऽप्यत्रैव निहितमिति नास्ति सन्देहः।

मेघदूतं विश्वसाहित्यस्यानुपममणिरस्ति। एतेन काव्येन कविस्सन्देशकाव्यस्य दूतकाव्यस्य वा परम्परायाः प्रणयनं कृतवान्। वस्तुतो मेघदूत-रचनायां सुधाघटेना-नीतानां तादृशानामुपकरणानां प्रयोगो विहितः, यो युगान्तरेऽपि नवां चेतनां नवां स्फूर्त्तिं नवं जीवनं प्रदास्यति। एतत्काव्यं मनस्तृप्तिं कृत्वामृततत्त्वं ददाति।

महाकवेस्त्रिषु नाटकेषु मालविकाग्निमित्रस्य सन्धानं जटिलमस्ति। इयं कवेः सर्वप्रथम रचना विद्यते। अस्मिन् विदर्भराजकुमार्याः मालविकायाः पूर्वविदिशायाः राज्ञोऽग्निमित्रस्यान्तः पुरस्य प्रणयकथा निबद्धा वर्त्तते। यद्यपि राजा वीरशासकोऽ-स्ति तथाप्यत्र तस्य चित्रणं धीरललितनायकरूपेण भूतमस्ति। एतस्य समस्तसमयः नृत्ये गाने तथा प्रेमलीलासु व्यत्येति। कस्मादपि कारणवशात् विदर्भराजपरिवारे कलहो जायते। ज्येष्ठभ्रातुर्यज्ञसेनस्य श्यालं मौर्यसचिवमग्निमित्रो बन्दीं करोति। स्व कनिष्ठो भ्रातामाधवसेनः स्वस्वसुर्मालविकायाः परिणयमग्निमित्रेण सह चिकी-र्षति। अतः स सुमतिनामकेन मन्त्रिणा सह मालविकां विदिशां प्रेषयति। दस्यू-नामुपद्रवेण केनापि प्रकारेण मालविकाग्निमित्रश्यालं वीरसेनं प्राप्ता। स च तां दासीं परिकल्प्य स्वस्वसुः महाराज्ञ्याः धारिण्याः समीपे प्रेषयति। तत्र सा प्रच्छन्ना-सती स्वविपद्वासरान् यापयति। राजाग्निमित्रश्चित्राङ्कितां मालविकां वीक्ष्य तस्याः रूपलावण्योपरि मुग्धो भवति। राजा मालविकां साक्षाद्द्रष्टुं समीहते। तस्यैतन्मनोरथपूर्त्यर्थं विदूषक एकां योजनां रचयति। स द्वयोः नृत्यशिक्षकयोः कलहमुत्पादयति। उभावपि तौ स्वश्रेष्ठतासिद्ध्यर्थं राजशरणं व्रजतः। राजा स्वयमिमं विवादं तपस्विन्यै कौशिक्यै समर्पयति। कौशिकी तौ नृत्यशिक्षकौ स्वस्वशिष्ये समुपस्थापयितुमादिशति। राजा मालविकायाः रूपसौन्दर्यं वीक्ष्यानन्दितो भवति। धारिण्या आदेशेन मालविकाशोकवृक्षदोहदं पूर्णं करोति। राजा कनिष्ठराज्ञ्या

इरावत्याः प्रार्थनां स्वीकृत्य तया सह दोलादोलनाय प्रमदवने गच्छति । अत्रेरावत्या आगमने विलम्बो जायते । तथा राजा मालविकया सह वार्त्तालापे प्रवृत्तो भवति । इरावती तत्रागत्य परं रुष्टा जायते । फलस्वरूपं ज्येष्ठया महाराज्ञ्या धारिण्या मालविकां वन्दीं कारयति । धारिण्यादिशति यद्यावत् सा स्वयं तां मोचयितुं प्रस्तुता न स्यात्, अथवा कोऽपि कापि वा तन्मुद्रिकां गृहीत्वा नागच्छेत्, तावत्सा कारागारान्मुक्ता न भवेत् । विदूषक एकां नवीनां योजनां रचयति तथा महाराज्ञ्याः सर्पमुद्रिकां प्राप्नोति । मालविकाञ्च तन्मुद्रिकासाहाय्येन मोचयित्वा राज्ञा सह समुद्रगृहे मेलयति । इरावती तत्र पुनरायाति तथा मालविकया सह राजानं वीक्ष्य क्रुध्यति । अन्ते विदूषकयोजनया स्वयमेव महाराज्ञी मालविकायाः परिणयं महाराजेन कारयति ।

प्रस्तुतनाटकं प्रेमप्रधानमस्ति । घटनाः परस्परं तथा ग्रथितास्सन्ति यथैकान्ते प्रणयिमिलनं भवति । वस्तुतः एतन्नाटकस्य घटनाचक्रं विशाखदत्तस्य मुद्राराक्षसस्य घटनाचक्रेण बहुशस्साम्यमात्रहति पार्थक्यमेतावदेवास्ति यदेकत्र राजनैतिकघटनाचक्र-शृङ्खला चलति, अन्यत्र प्रणयव्यापारस्य शृङ्खला । सर्वे समालोचका अस्य नाटकस्य संविधानं जटिलं मन्वते ।

विक्रमोर्वशीयमेकं नाटकमस्ति । एतस्य नायक-नायिके देव-मानवोभयकोट्योः सम्बन्धमावहतः । नाटके पुरूरवस-उर्वश्याश्च प्रणयकथा वर्णिता विद्यते । महाकविनर्ग्वेदे शतपथब्राह्मणे च निबद्धं प्राचीनकथासूत्रं गृहीत्वास्य नाटकस्य रचना विहिता । अस्मिन् पुरूरवसः प्रेमोन्मादस्योर्वश्याश्चासङ्गतोद्दाम प्रेम्णोऽभिव्यञ्जना कृतास्ति । नाटके दिव्यशक्तीनां प्रयोगेण काचिदस्वाभाविकता गता विद्यते । उर्वश्याः प्रेम स्वार्थपूर्णमस्ति । सा प्रणयिनोऽपायशङ्कया स्वशिशुमपि त्यजति । परन्त्वन्ते कविः तस्याः प्रेम पारिवारिकस्य राष्ट्रियजीवनस्य च संयमेन संयोज्य रूपसौन्दर्येण चोत्पन्नं प्रणयं जीवनप्रदशक्तिरूपे परिवर्त्तितवान् । नाटकेऽस्मिन् शान्तेः सौन्दर्यस्यानुरागस्य च त्रिवेणी वर्त्तमानास्ति ।

कालिदासीयनाटकानां सर्वोत्तमं फलमभिज्ञानशाकुन्तलमस्ति । अस्य चित्रपटोऽत्यन्तव्यापकस्समृद्धश्च विद्यते । कथानकस्यारम्भो नवप्रस्फुटितयौवनया प्रकृति-किशोर्या, शकुन्तलयाश्रमलता-विरुधां सेचनाज्जायते । तदन्तश्च पुत्रसहितायाश्शकुन्तलायाः दुष्यन्तस्य च मिलनेन भवति । महाकविनात्र नाटके सौन्दर्यस्य पवित्रता मादकतयोः, प्रेम्णो निश्छलतायाः विशदतायाश्च, प्रकृतिजन्यसरलतायाः मुग्धतायाश्च, ऋषिकुलस्योदारतायाः दयालुतायाश्च, कुलपतिकण्वस्यादर्शवात्सल्यस्य दुर्वाससः निर्ममदण्डस्य च, वासनायाः प्रक्षालनस्य तथात्मनो निर्मलीकरणस्य,

रोमांसासवस्य प्रेयसश्श्रेयसोर्द्वन्द्वस्य च ग्रथनं कृतम्। नाटकस्य कथावस्तु परं पुरातनमस्ति परन्तु कविनास्मिन् स्वप्रतिभायाः संयोजनं कृत्वादर्शचरित्राणामवतारणा कृता। महाभारतस्य विलासी दुष्यन्त आदर्शप्रणयी विवेकी च चित्रितः। संक्षेपे, नाटकेऽस्मिन् मानवस्य शाश्वतकार्यव्यापाराणां चित्रणमतीवसजीवं सर्वाङ्गपूर्णञ्चास्ति।

## कालिदासस्य सौन्दर्यदर्शनम्

महाकविकालिदासेन स्वमहाकाव्येषु मानवीयस्य प्राकृतिकस्यैवं सांस्कृतिकस्य त्रिविधप्रकाराणां सौन्दर्यस्य चित्रणं कृतम्। प्रकृतेः रमणीयतानां ललित-सरस-चित्रणैस्सह मानवसौन्दर्यस्य हृदयावर्जकं चित्रणं भूतमस्ति। वस्तुतः सौन्दर्यं दैवी विभूतिरस्ति। इदं चरमचरञ्च सर्वमेव स्वाभिमुखं करोति। नारी-शरीरे यत्सौन्दर्यं प्रकाशितं भवति तदेव प्रकृतौ विभिन्नरूपेण प्रतिबिम्बितं भवति। अतएव कालिदासो नारीरूपस्य चित्रणकाले प्रकृतिजगतोऽपि रमणीयचित्रस्याङ्कनं करोति। स प्रकृति-चित्रणावसरे नारीणामवयवसौन्दर्यमुपस्थापयति। अस्य प्रधानकारणमेतदस्ति यत् प्रकृति-मनुष्यश्चान्योन्यं परं संयुक्तौ स्तः। मनुष्यः प्रकृतेरेवैको भागोऽस्ति। मानवशरीरस्यालोकप्रदा प्रभा तस्या एव व्यापकप्रभाया अंशभूता विद्यते, यया विश्वस्य समस्तपदार्था उद्भासिताः जायन्ते। कालिदासस्सौन्दर्यचित्रणकृते संयममौचित्यं सङ्गतिञ्च परमावश्यकमुपादानं मनुते। तस्य सिद्धान्तोऽस्ति—

सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन।
सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव॥

—कुमारसम्भवम् १।४९

उल्लिखितपद्ये सौन्दर्यचित्रणस्य निम्नाङ्कितसिद्धान्ताः समाहितास्सन्ति—

१. यथाप्रदेशत्वमथवौचित्यविज्ञानम्।
२. द्रव्यसमुच्चयः—सङ्गतिः।
३. प्रयत्नः—कुशलता—सन्तुलनम्—विरोधितत्त्वानां नियमन-निपुणता।
४. सर्वोपमसामग्री-योग्यता—रूपचयनाय सङ्ग्राह्यसामग्रीयोग्यता—प्रमाणपटुता—परिज्ञानम्।

स्पष्टमेतद्यत् कविना सौन्दर्यशास्त्रस्य सर्वे सिद्धान्ता एकस्मिन्नेव पद्येऽनुस्यूताः। निसर्गकन्यायाः शकुन्तलायाश्चित्रणे कविनासौन्दर्यं साकाररूपं प्रदातुं ततः पूर्वं

तस्य रेखाकृतेरङ्कन-सिद्धान्तः प्ररूपितः। यथैकश्चित्रकारः स्वचित्रं सर्वाङ्गपूर्णं विदधातुं पूर्वं तस्य रेखाङ्कनं करोति, तत्पश्चात् स्वकूचिकया वर्णमारोप्य चित्रं सजीवं विदधाति। तथैव सौन्दर्याभिव्यञ्जकः कविरथवा सौन्दर्यस्रष्टापि पूर्वमाकृतिमेकां स्वचित्ते चिन्तयति। एतदाकृतिनिर्माणनामैव कलाक्षेत्रे बिम्बयोजनास्ति। कलाकारस्स्वबिम्बानेतान् सफलतापूर्वकमभिव्यक्तान् कृत्वा सौन्दर्यं सृजति। महाकविकालिदासेन बिम्बनियोजनस्यैव सिद्धान्तो निम्नाङ्कितपद्ये निरूपितः—

> चित्ते निवेश्य परिकल्पितसत्त्वयोगा रूपोच्चयेन मनसा विधिना कृतानु।
> स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः॥
>
> —शाकुन्तलम् २।९

श्लोकस्य सामान्यार्थोऽस्ति यद् ब्रह्मा शकुन्तलायाः निर्माणं कृतवान्, तदा सर्वप्रथममसौ तस्याश्चित्रं निर्माय, मनसि संसारस्य सर्वासां सुन्दरीणां रूपाण्येकत्र कृत्वा तस्यां प्राणसञ्चारं कृतवान्। यतो ब्रह्मणः कुशलतायां शकुन्तलायाश्च सुन्दरतायामुभयत्र विचारेण ज्ञायते यदियं काप्यपूर्वसुन्दरी निर्मिता।

स्पष्टमेतद्यत् कविकालिदास उल्लिखितपद्ये रूपव्यापारं भावं वा मूर्त्तरूपेण प्रस्तोतुं बिम्बविधानस्यावश्यकतां प्रकटितवान्। वस्तुतो बिम्बविधानं कल्पनाया एव रूपान्तरमस्ति।

महाकविकालिदासेन सौन्दर्याधायकतत्त्वेषु कान्तेः दीप्तेः माधुर्यस्यैवं लावण्यस्य परिगणना कृता। यौवनन्तु सौन्दर्यस्यानुप्राणको धर्मो विद्यते। समागते यौवने रूपलावण्यमतिरुचिरं जायते। कविनोमायौवनोदयस्याभिरामचित्रणं कुर्वता कथितम्—

> उन्मीलितं तूलिकयेव चित्रं सूर्यांशुभिर्भिन्नमिवारविन्दम्।
> बभूव तस्याश्चतुरस्रशोभि वपुर्विभक्तं नवयौवनेन॥
>
> —कुमारसम्भवम् १।३२

यथा तूलिकया साधुवर्णभरणेन चित्रं विकसति, तथा सूर्यकिरणान् स्पृष्ट्वा कमलं विकसति। एवमेव नवयौवनस्पर्शनोमाशरीरमभितः आकर्षकञ्जातम्। महाकवियौवनोदयं सौन्दर्यसर्जनस्य सामान्यकारणं मनुते। यौवनस्य पदार्पणेन सह शारीरिकपरिवर्त्तनेन सह रूपलावण्येऽपि परिवर्त्तनं जायते। कविनास्यैव तथ्यस्य नियोजना निम्नलिखितपद्ये कृता—

> सा राजहंसैरिव सन्नताङ्गी गतेषु लीलाञ्चितविक्रमेषु।
> व्यनीयत प्रत्युपदेशलुब्धैरादित्सुभिर्नूपुरसिञ्जितानि॥
>
> —कुमार० १।३४

यौवनभारेणानता यदा सा हावभावैस्सह चलति स्म तदैतादृशी लगति स्म यथा तन्नूपुरध्वनिं शिक्षितुं लोलुपैः राजहंसैस्स्त्रहावपूर्णागतिः पूर्वमेव तस्यै निवेदिता। उमायाश्चलनेऽप्यसाधारणमाकर्षणमस्ति। चरणयोरुन्नताङ्गुष्ठनखप्रभायामपूर्वं ज्योतिरस्ति। एवं ज्ञायते यत्तदीयचरणावरुणिमानमुद्गिरतस्तथा यदा चरणावुत्थाप्योत्थाप्य रक्षति तदा सा प्रतिपदं स्थलकमलविकासं कुर्वन्ती गच्छति।

यौवनेन सह कविना लावण्यमपि सौन्दर्याधायकं स्वीकृतम्। मुक्तासुच्छायाया आन्तरिकतरलतासदृशमङ्गेषु दीव्यद्वस्तु लावण्यमस्ति। एतल्लावण्यं प्रतिक्षणं नव्याभां गृहीत्वा सौन्दर्यसर्जनं करोति। अतो यत्र कविर्नारी-सौन्दर्य-चित्रणं करोति तत्र लावण्यायापि महत्त्वं ददाति। स निसर्गकन्यायाश्शकुन्तलाया अङ्ग-प्रत्यङ्ग-सौन्दर्य-चित्रणे सौन्दर्यमूल्याङ्कनं निम्नाङ्कितप्रकारेण कृतवान्—

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्॥

—अभि० १।२०

शकुन्तलायाः रक्ताधरौ लताकिसलयशोभिनौ स्तः। तस्या उभौ करौ कोमलशाखासमानौ प्रतीयेते। तदङ्गेषु विकसितं नवयौवनं लोभनीयपुष्पसमानं प्रतीतं भवति।

कविर्यक्षप्रियायाः, उर्वश्याः, मालविकायाः, पार्वत्यास्तथा शकुन्तलायाः सौन्दर्यचित्रणे सर्वत्र यौवनस्य समानुपाततायाश्च महत्त्वं प्रदर्शितवान्। तेन प्रकृति-चित्रणे विभिन्नोपमानैः रूपकैश्च सौन्दर्याभिव्यञ्जना कृता। कविनर्तुसंहारे शरदृतोश्चित्रणे तद्रूपायाः लावण्यवत्याः नवायाः बध्वाश्चित्रमुपन्यस्तम्—

काशांशुका विकचपद्ममनोज्ञवक्त्रा सोन्मादहंसरवनूपुरनादरम्या।
आपक्वशालिरुचिरानतगात्रयष्टिः प्राप्ता शरन्नववधूरिव रूपरम्या॥

—ऋतु० ३।१

महाकविराभूषणानि सौन्दर्यसाधनानि न मनुते। स सहजं निरलङ्कृतसौन्दर्य-मेव प्रशंसति। दुष्यन्तश्शकुन्तलायाः निसर्गजं सौन्दर्यं वीक्ष्य मुह्यति। सोऽत्यन्त-विस्मयेन सह कथयति—

दूरीकृता खलु गुणैरुद्यानलता वनलताभिः।

—शाकुन्तलम् १।१७

अत्र वनलताप्रतीकं शकुन्तलाकृतेऽस्ति तथोद्यानलताप्रतीकं राजभवनस्थितानां रम्याङ्गनानांकृतेऽस्ति। शकुन्तलायाः सहजसौन्दर्यस्य समक्षं राजप्रासादललना-

सौन्दर्यं तुच्छमस्ति । कविरग्रे "अक्लिष्टकान्तिः" पदेन (शाकुन्तलम् ५।१९) सहजसौन्दर्यं प्रति स्वास्थां व्यनक्ति । वल्कलवेष्टितायाः शकुन्तलायाः मनोज्ञता-चित्रणं कुर्वन् कविः कथयति—

सरसिजमनुविद्धं शैवलेनापि रम्यं,
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी,
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥
—अभि० १।१९

यथा शैवलानुविद्धमपि कमलं रमणीयमेव भवति, चन्द्रमसश्श्यामः कलङ्कः-शोभामेव तनोति, तथैव तन्वी शकुन्तला वल्कलवेष्टितापि मनोज्ञैवास्ति । वस्तुतः मधुराकृतीनां मण्डनं किमपि न भवति ।

महाकविकालिदासस्सौन्दर्य-सम्बन्धं द्रष्टुः कल्पनाजगता मनुते । कल्पनाया उत्तिष्ठत्सु तरङ्गेषु रूपस्य नवनवो विकासः परिलक्षितो भवति । सहृदयभावुकः प्रियवस्तुनः मनसो विविधेन्द्रधनुष्यां छायायां भावनां कुर्वन् तिष्ठति । फलतो नवीनकल्पनाः नवनवावरणेषु समभिव्यक्ताः सत्यः सौन्दर्यसृष्टिं कुर्वन्ति । अतस्सौ-न्दर्यमेकरसं भवदपि प्रतिक्षणं नवीन मिव प्रतीयते ।

न च न परिचितो न चाप्यरम्यश्चकितमुपैमि तथापि पार्श्वमस्य ।
सलिलनिधिरिव प्रतिक्षणं मे भवति स एव नवो नवोऽयमक्ष्णोः ॥
—अभि० १।११

प्रस्तुतपद्ये प्रयुक्तेन 'नवनवोऽयमक्ष्णोः" वाक्यांशेन कविः प्रतिक्षणं नवीन-रूपे सौन्दर्य - दर्शनस्य सङ्केतं कृतवान् । परन्त्वेतत्सत्यमस्ति यत्सौन्दर्यशक्तेः कल्पनायाः यस्यान्तिकेऽभावस्स प्रतिक्षणनवनवोन्मेषशालि-सौन्दर्यस्य दर्शनं कर्त्तुं न शक्नोति । सौन्दर्यानुभूत्यै कल्पनाशक्तेः नितान्तमावश्यकतास्ति । कल्पनैवातीतं भविष्यञ्च मेलयितुं प्रयासं करोति । नवीनलोकसर्जनमपि कल्पनाप्रसूतमेवास्ति । अतएव सौन्दर्यानुभूतिकृते कल्पनायाः जागरणमावश्यकमस्ति ।

सौन्दर्यं वस्तुनिष्ठमस्ति वात्मनिष्ठमिति विचारयतः कालिदासस्योक्तिः स्पष्टा वर्त्तते । सौन्दर्यं वस्तुनिष्ठमितिपक्षस्य समर्थने "सर्वं प्रिये चारुतरं वसन्ते" (ऋतु० ६।२) "तथाहो सर्वास्ववस्थास्वनवद्यता रूपस्य" (मालविका० २।२ श्लोकानन्तरं गद्यम्) अहो सर्वास्ववस्थासु चारुता शोभां पुष्यति, उक्तयः पर्याप्तास्सन्ति ।

महाकविरागते वसन्तर्तौ समस्तं प्रकृतिजगतं रमणीयं पश्यति। जगतो नैकोऽप्यणुः सौन्दर्य-रहितोऽस्ति। एवमेव कविः समस्तासु स्थितिष्वनवद्यरूपं सौन्दर्यममन्यत। अतएव सौन्दर्यं वस्तुनिष्ठमस्त्येतत्पक्षं कविविचारः समर्थयति। एतस्य कथनस्य पुष्टि "ददाति सौभाग्यमयं वसन्तः" (ऋतु० ६।४) उक्त्यापि भवति। सौन्दर्य-मात्मनिष्ठमित्येतत्पक्षस्य समर्थनेऽपि कवेरनेकोक्तयस्सन्ति। अभिज्ञान-शाकुन्तले दुष्यन्तश्शकुन्तलां सुन्दरीं समर्थयन् कथयति—"सर्वः कान्तमात्मीयं पश्यति" (अभि० २।७ श्लोकादनन्तरं गद्यम्)—व्यक्तिस्स्वात्मीयं सुन्दरं पश्यति। प्रत्युत रुच्यनुसारमेव वस्तु-सौन्दर्यं प्रतीयते। एतस्य तथ्यस्य पुष्टिः कुमारसम्भवस्य "प्रियेषु सौभाग्यफलाहि चारुता" (५।१) श्लोकखण्डेन भवति। मालविकाग्नि-मित्रे कथितं यत् "पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः" (१।६) व्यक्तिविशेषस्य योग्यतायाः, प्रतिभायाः, कल्पनाशक्तेश्चानुसारं वस्तुगुणसौन्दर्य-बोधो भवति। रघुवंशस्य "भिन्नरुचिर्हिलोकः" (६।३०) पदेनापि सौन्दर्यस्यात्म-निष्ठतैव ध्वन्यते। यदि कालिदासदृष्टावेकान्ततस्सौन्दर्यं वस्तुनिष्ठमभविष्यत्तदा रुचेः प्रश्न एव नागमिष्यत्। द्राक्षा स्वभावतो मधुरास्ति। केतकीप्रसूने निसर्गतः सुगन्धो विद्यते, परन्तु तन्माधुर्यसुगन्ध-प्रतीतिं रुचिसम्पन्न एव जनः करोति। यस्य मनः कार्यान्तरेष्वासक्तं तथा यस्य रुचिर्दृश्यवस्तुनोऽन्यत्रास्ति, स सहजमाधुर्यस्य लावण्यस्य चानुभूतिं न कर्त्तुं शक्नोति। अत उपयोग-रुच्योस्सौन्दर्यानुभूतिकृत आवश्यकता वर्त्तते। एतयोः परिष्कारः शिक्षया, स्वाध्यायेन, वातावरणेन, एकाग्रतया, सत्संगप्रभृति-द्वारेण च भवति।

सौन्दर्यं वस्तुतो विश्वस्य प्रत्येककणव्याप्तमस्ति। परन्तु तद्ग्रहणक्षमता सर्व-जनेषु समाना न भवति। ग्राह्यशक्तौ तारतम्यं भवति। ग्रीष्मस्य सन्तापेन सन्तप्तेषु शिलाखण्डेषु तथा शरदो हिमाच्छन्नपरमशीतलशिलाखण्डेषु विरोधिरूपेषु सत्स्वपि समानं सौन्दर्यमस्ति। परन्त्वेतस्य सौन्दर्यस्य ग्राहिका शक्तिः रुचिप्रकृत्यनुसारं विभिन्नास्ति। एवं प्रकारेण महाकविकालिदासेन सौन्दर्य-मुभयनिष्ठं कथितमस्ति। स वस्तुनि सौन्दर्य-सत्तां स्वीकरोति, परन्तु तद्ग्रहणं तावन्नभवति, यावत् रुच्युपयोगौ तद्ग्रहणं कर्त्तुं न नियुज्येते।

कवेः सौन्दर्यभावना प्रणयसिक्ता विद्यते। सौन्दर्यचित्रं प्रणयालिङ्गितं सदैव प्रस्फुटितं जायते। जड-चेतनयोरुभयोरपि प्रणय-व्यापारप्रवृत्तिः परिलक्ष्यते। कविदृष्टौ नद्यो मानिन्याः नायिकायाः कार्यं कुर्वन्ति। सरित्समुद्रौ प्रणयव्यापाराय लालायितौ स्तः। तयोः केलिः कुशलनागरककेल्यपेक्षया न्यूना नास्ति। कविः कथयति—

मुखार्पणेषु प्रकृतिप्रगल्भाः स्वयं तरङ्गाधरदानदक्षः,
अनन्यसामान्यकलत्रवृत्तिः पिबत्यसौ पाययते च सिन्धुः ॥

—रघु७ १३।९

सांस्कृतिकसौन्दर्ये लज्जायाः, विनयस्य, संयमस्य, विवेकस्य साहसादिगुणानामभिव्यञ्जना परिगण्यते। पार्वती यदा दैहिकसौन्दर्येण शिवाकर्षणेऽसफला जाता, तदा सांस्कृतिकसौन्दर्यसञ्चये प्रवृत्ता। एतत्सौन्दर्यं तदैव प्राप्यते यदा 'अशिव-भावना' नश्यति तथा शिवप्राप्तिर्भवति। कविना पार्वत्या एव संकल्पो निम्नप्रकारेण चित्रितः—

इयेष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः।
अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः॥

—कुमारसंभवम् ५।२

एष आशयोऽस्ति यज्जीवने वयमनेकमूल्यानामुपभोगं कुर्मः। एवं विशिष्टावसरेषु प्रत्येकं मूल्यं महत्त्वपूर्णं प्रतीयते। नर-नार्योः कतिपय-व्यापाराः संस्कृतिविशेषस्य पृष्ठभूमौ मनोज्ञाः प्रतीयन्ते। रूपयौवनयोराकर्षणस्य स्वतः किमपि मूल्यं नास्ति। परन्तु यदेदं तपस्यया पूतं भूत्वा शिवे सम्बद्धं भवति, तदा सार्थकं जायते। वस्तुतः सौन्दर्यं तावन्निरर्थकं वर्त्तते, यावच्छिवेन सह तस्य परिणयो न भवति। शिवप्राप्तिहेतवे तपस्याचरणायाः पार्वत्याः मुखश्रीर्न मम्लौ। यतः सोदात्तशीलरसेन प्राणरसं प्राप्नोति स्म। ब्रह्मचारिमुखेन शिवस्याधिकां निन्दामशृण्वन्ती "स्तनभिन्नवल्कला" पार्वती यदेवाग्रे गन्तुं प्रवृत्ता, तदैव शङ्करेण स्वप्रकृतरूपं प्रदर्शितम्। कृतस्मितश्च तस्याः करं जग्राह। भेदे प्रकाशिते जात एव पार्वती चकिता जाता। कविः पार्वत्या अस्याः मुद्रायाः मार्मिकं संवेदनापूर्णञ्च वर्णनं कुर्वन् तस्याः सांस्कृतिक-सौन्दर्यं प्रस्तुतवान्। लज्जा भारतीयनार्याः सांस्कृतिक-सौन्दर्यमस्ति, यस्य निर्वाहं कविर्निम्नपद्ये महत्या कुशलतया कृतवान्—

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि—
र्निक्षेपणाय पदमुद्धृतमुद्वहन्ती।
मार्गाचलव्यतिकराकुलितेव सिन्धुः,
शैलाधिराजतनया न ययौ न तस्थौ॥

—कुमार० ५।८५

अकस्माच्छङ्करं वीक्ष्य पार्वतीशरीरं वेपमानमतिष्ठत्। सा स्वेदार्द्रा जाता। सा चलितुमुत्थापितौ चरणौ तत्रैवावरुद्धौ कृतवती। यथा प्रवाहपथे पर्वतागमनेन

नदी नाग्रे वर्द्धते न च पृष्ठत एव तथैव पार्वती न गन्तुं प्रवृत्ता न च स्थितैवाभवत् ।

शङ्करप्रणयविज्ञप्तौ सा सखीमाध्यमेन कथयति यत् परिणयस्यान्तिमनिर्णायकः पिता हिमालयो वर्त्तते । अतएव तस्य स्वीकृतिरावश्यको विद्यते । चिरप्रतीक्षित-वस्तुनि प्राप्ते तदुपभोगायाचाञ्चल्यं तथा स्वयमुत्तरं न दत्त्वा सखीमाध्यमेन तद्दानं पार्वत्याः सांस्कृतिक-सौन्दर्य-चेतनायाः प्रतिफलमस्ति । महाकविनास्मिन् सन्दर्भे लोकशीलरक्षायाः पराकाष्ठा प्रदर्शिता । विवाहावसरे वरवध्वोः लज्जाशील-व्यवहारोऽत्यन्तस्वाभाविकश्चित्तमाकर्षति । परन्त्वेतादृश्योऽभिव्यञ्जनाः सांस्कृतिक-सौन्दर्यं विना सम्भवाः न सन्ति । निर्वासिता सीता भगवन्तं रामचन्द्रं प्रति यं सन्देशं प्रयच्छति, तत्र सांस्कृतिकसौन्दर्यस्य परमौत्कर्ष्यमस्ति—

कल्याणबुद्धेरथवा तवायं न कामचारो मयि शङ्कनीयः ।
ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ॥

—रघु० १४।६२

किं वा तवात्यन्तवियोगमोघे कुर्यामुपेक्षां हतजीवितेऽस्मिन् ।
स्याद्रक्षणीयं यदि मे न तेजस्त्वदीयमन्तर्गतमन्तरायः ॥

—१४।६५

साहं तपः सूर्यनिविष्टदृष्टिरूर्ध्वं प्रसूतेश्चरितुं यतिष्ये ।
भूयो यथा मे जननान्तरेऽपि त्वमेव भर्ता न च विप्रयोगः ॥

—रघु० १४।६६

सांस्कृतिक-सौन्दर्यमध्ये कविना सुसंस्कृतवाण्या अपि महत्त्वं प्रदर्शितम् । विनयशीलतातिरिक्तमर्थगर्भत्वमपि सुसंस्कृतवाण्यामपेक्षितं भवति ।

संस्कारवत्येव गिरामनीषी तया स पूतश्च विभूषितश्च ॥

—कुमार० १।२८

सांस्कृतिकसौन्दर्यस्याभिव्यञ्जना त्याग-कर्त्तव्यपरायणतयोः सीमामध्ये कविना-नेकवारं कृता । राजा दिलीपः एकधेनुरक्षाहेतोः प्राणार्पणाय प्रस्तुतोऽस्ति । स संरक्षणीयवस्तुनो रक्षादायित्वस्य पूर्णनिर्वाहं चिकीर्षति । तदर्थं तस्य प्राणमोहोऽपि न वर्त्तते । सः कथयति—

स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद,
दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः

—रघु० २।४५

उन्नतक्षत्रियजातिवाचकः 'क्षत्रशब्दः' विपत्तेः रक्षाकरणार्थे निहितोऽस्ति। अतएव तद्विपरीताचरणस्य पुरुषस्य राज्येनापकीर्त्तिमलिनैः प्राणैर्वा कोऽस्ति लाभः। दिलीपस्यैतद्दृढतायास्तथा दायित्वनिर्वाहक्षमतायाश्च शाश्वतिकजीवनमूल्येषु गणना विद्यते। सांस्कृतिक-सौन्दर्यमेतादृशेऽभिव्यक्तं भवति यत्र कविस्स्वपात्राणां चिरन्तनजीवनमूल्येष्वभिव्यञ्जनां करोति। मातुर्वात्सल्यस्य, पत्न्याः कर्त्तव्यस्य, स्वसुर्निश्छलप्रेम्णश्च सांस्कृतिकसौन्दर्य एव प्राधान्यमस्ति। गर्भवती नारी स्वगर्भरक्षार्थं स्वसमस्तसुखानां त्यागं करोति। तस्याः शरीरं विवर्णं पाण्डु च जायते' परन्तु प्रतिभाशालिनः कवेः दृष्टौ तस्या इदं रूपमपि सांस्कृतिकसौन्दर्यान्तर्गतमस्ति। महाकविकालिदासः रघुवंशमहाकाव्यस्य तृतीयसर्गे रघोरुत्पत्तिसन्दर्भेऽस्य सौन्दर्यस्य पूर्णाभिव्यक्तिं कृतवान्। सौन्दर्यदर्शनमादर्शयथार्थयोः समन्वये समाहितः विद्यते।

## महाकविकालिदासकाव्येषु निरूपितं लोकजीवनम्

महाकविकालिदासः केवलान्तः पुर-प्रणयगाथालेखको विलासिजीवनस्यैव कविर्नास्ति, अपि तु यथास्थानं लोकजीवनस्य चित्रणकर्त्ता कविरस्ति। तस्याधिकांशाभिव्यञ्जना समूहवाणी भूत्वा समूहे नितरां मिलित्वैवोपस्थिता वर्तते तस्य काव्यानामनेकसन्दर्भाः लोकचित्तेभ्य उत्पन्नाः भूत्वा सर्वसाधारणमान्दोलितं चालितं प्रभावितञ्च कुर्वन्ति। नाटकीयपात्रैः कविर्जनभाषाप्राकृतस्य व्यवहारं कारितवान् तथा धीवरलुब्धकसदृशान् निम्नश्रेणीप्रतिनिधिजनान् पात्रेषूपस्थाप्य तस्य व्यवसायेभ्यः कार्येभ्यश्च तेन मान्यता प्रदत्ता। फलतो जनसामान्यरीति-प्रथयोः आचारव्यवहारयोः श्रद्धायाः विश्वासस्य, आवासस्य सहिष्णुतायाः जनानाञ्जीवनमूल्यस्य च यथास्थानं तेन चित्रणं कृतम्। कृषकजीवनस्य, ग्राम्यजीवनस्य, साधारणव्यावसायिकस्य, श्रमिकस्य च जीवनचित्राणि कार्यव्यापाराणि च प्रस्तुतानि।

कविना कृषेः कृषकजीवनस्य च विभिन्नपरिस्थितिषु वर्णनं कृतम्। शालिक्षेत्रेषु यदा शालयः पक्वाः जायन्ते तदा कृषकास्स्वतद्वैभवं वीक्ष्यानन्दमग्नाः भवन्ति। कविः कथयति—"वप्राश्चपक्वकलमावृतभूमिभागाः" (ऋतु० ३।५)—पक्वधान्यक्षेत्राणि दर्शकवृन्दानां मनांसि चञ्चलयन्ति तथा कृषकानपरिमितसुखिनः कुर्वते। अस्मिन् सन्दर्भे कविस्सस्यसमृद्धानि क्षेत्राणि वीक्ष्य केवलं ग्रामीणजनानां प्रसन्नताया एव चित्रणं न करोति, प्रत्युत पथिकानामपि। पथिका अपि सस्यसमृद्धिमवेक्ष्याकृष्टाः जायन्ते। तेऽपि क्षणं यावत् तन्महनीयविभूतिदर्शनं कृत्वा कृतकृत्याः भवितुमिच्छन्ति। वस्तुतः भूमेश्शोभा सस्यसमृद्धिरेवास्ति। सस्यानामभावे क्षेत्राणि

विलपन्तीव परिलक्ष्यन्ते । कविर्ग्रामसमृद्धेः प्रतिपादनं कुर्वन् काव्यभाषायां कथयति—

> प्रभूतशालिप्रसवैश्चितानि मृगाङ्गनायूथविभूषितानि ।
> मनोहरक्रौञ्चनिनादितानि सीमान्तराण्युत्सुकयन्ति चेतः ॥
>
> —ऋतु० ४।८

ग्रामाद्बहिः क्षेत्रेषु पूर्णशालिः क्रीडन्नस्ति । मृग्यः सस्यवैभवेन प्रसन्नाः कूर्दन्ते । सारसा आनन्दमग्नाः सन्तः कोलाहलध्वनिं कुर्वन्तस्सन्ति । एवं प्रकारेण तेषां क्षेत्राणां समृद्ध्या तथागणितप्राणिनां प्रसन्नतया सम्बद्धमन्नवातावरणं वीक्ष्य पथिकानां मनांसि हर्षातिरेकेणात्मबहिः निर्गच्छन्ति सन्ति ।

कवये पक्वसस्यक्षेत्राणि नितान्तं रोचन्ते । स वारम्वारं तत्समृद्धि-वर्णनं करोति । तस्य धारणा वर्त्तते यत् क्षेत्राणामियं विभूतिः जनजीवनस्य प्राणाधारोऽस्ति । जीवनस्य समस्तप्रसन्नतास्सस्यवैभवाश्रिता एव सन्ति । जीवनस्य विविध-क्रियाकलापानां मनोरञ्जनानाञ्चैष एवाधारो वर्त्तते । अतएव पक्वधान्यक्षेत्राणा-मध्ययनं कृत्वा स कथयति :—

> बहुगुणरमणीयो योषितां चित्तहारी,
> परिणतबहुशालिव्याकुलग्रामसीमा ।
>
> —ऋतु० ४।१९

पद्येऽस्मिन् कविर्धान्यकर्त्तनायोत्पन्नव्याकुलतायाः संकेतं कृतवान् । ग्रामपार्श्व वर्त्तीनि क्षेत्राणि स्वसस्यसमृद्धिकारणात् लोकमनांसि लोभयन्ति, सहैव ग्रामसुषमा-मपि वर्द्धयन्ति ।

धान्यस्येक्षोश्चोत्पत्तिस्सहैव भवति । अनया शिशिरर्तुसौन्दर्यं वर्द्धते । इयं जनमानसे नानाप्रकारोल्लासमुत्पाद्य ग्रामश्रियं प्रति नागरिकानपि समुत्सुकान् करोति । कविः कथयति—

> प्ररूपशालीक्षुचयावृतक्षितिम् ।
>
> —ऋतु० ५।१

शिशिरर्तौ धान्यस्येक्षोश्च क्षेत्रेषु तुहिनपातो जायते । तथानेन हिमपातेन क्षेत्रशोभा विलक्षणा जायते । सारसाः क्षेत्राणामेतत्समृद्धि विलोक्यानन्दिताः भवन्ति । ग्रामस्य सर्व आवालवृद्धाः क्षेत्राणां रक्षां कुर्वन्तः प्रसन्नाः दृष्टिगोचराः जायन्ते ।

महाकविकालिदासस्य गुडस्तण्डुलाश्च परमप्रियास्सन्ति। शिशिरर्त्तौ गुडस्य विभिन्नोपयोगैः नानाप्रकाराः खाद्यपदार्थाः प्रस्तूयन्ते। तण्डुलैरपि विविधपदार्थानां निर्माणं भवति। अतो महाकविर्जनसाधारणायोल्लिखितवस्तूनामुपयोगस्य सङ्केतं कुर्वन् कथयति।

प्रचुरगुडविकारः स्वादुशालीक्षुरम्यः

—ऋतु० ५।१६

ग्रीष्मानन्तरं वर्षावर्णनप्रसङ्गे कविस्तत्कालकृष्टक्षेत्रेभ्यो निस्सृतसुरभेश्चित्रणं कृतवान्। प्रथमवर्षापश्चात् शुष्कतडागेषु जलं पूर्णं भवति तथा तेभ्योऽपि सुरभि-र्निस्सरति। एवं प्रकारेण ग्रामीणजीवनस्य पूर्णचित्रणं कुर्वन् कविः कथयति :—

सद्यः सीरोत्कषणसुरभि

—पूर्वमेघ : १६

पयोमुचां शुचिव्यपाये वनराजिपल्वलम्

—रघु० ३।३

कृषि-व्यवस्था-सम्बन्धे कवेः काव्येनावगम्यते यत्तदानीं श्रावणे मासि बीजवपनमभवत्[1]। यदा धान्यं किञ्चिद्‌बृहज्जातमासीत् तदा सुन्दरसस्योत्पादनाय 'रोपणी-कार्यं'[2] क्रियमाणमासीत्। धान्यारोपणपश्चादन्यक्रिया अपि क्रियन्ते स्म। कदाचिच्छ्रावणे मासि भाद्रपदमासिच वर्षाः नाभवन्। यस्य कारणविशेषो ग्रहयोगो[3] मतोऽस्ति। अवर्षणस्थित्या ग्रामीणजीवने व्यतिक्रम आगच्छन्नासीत्। कृषि-सहायतार्थं प्रवहणं चलदासीत्, दुग्धपशूनां पालनं क्रियमाणमासीत्। गोदोहनकाले तासां वत्सेभ्यः पयस्त्यक्तमभवत्।

"हैयंगवीनमादाय घोषवृद्धानुपस्थितान्" ( रघु० १।४५ ) श्लोकांशेनाभि-व्यज्यते यत् ग्रामेषु घोषिणः पशुपालनकार्यं कुर्वन्ति स्म। तेषां व्यवसायः दुग्धस्य दध्न एवं हैयंगवीनस्य विक्रय आसीत्।

कविः कृषकजीवनस्य चित्रणं कुर्वन् लिखतिः—

इक्षुच्छायनिषादिन्यस्तस्यगोप्तुर्गुणोदयम्।
आकुमारकथोद्‌घातं शालिगोप्यो जगुर्यशः॥

—रघु० ४।२०

---

१. अन्तर्गूढं क्षितिरिव नभोबीजमुष्टिं दधाना —रघु० १६।५७
२. आपदेपद्मप्रणताः कलमा इव ते रघुम्। फलैः संवर्धयामासुरुत्खातप्रति-रोपिताः॥ —रघु० ४।३७
३. लोकशोषणः नभोनभस्ययोर्वृष्टिमवग्रह इवान्तरे —रघु० १२।२९

धान्यक्षेत्राणां गोप्य्यः कृषकबाला इक्षुच्छायायामुपविश्य वार्तालापमकुर्वन्। कवेः "मदोदग्राः ककुद्मन्त" ( रघु० ४।२२ ) पद्यांशेन ध्वन्यते यत् कृषावुन्नत-स्कन्धाः सदनड्वाह एव प्रयुज्यन्ते स्म। ग्रामपशवः क्षेत्रे चरन्ति स्म तथा-नियन्त्रितास्ते क्षेत्राण्युत्पाटयन्ति स्म[1]। धान्यं नष्टमभवत्। सेचनार्थं कुल्यायाः व्यवस्थासीत्[2]। धान्यानि शुष्काणि कर्त्तुं तानि सूर्यतापे प्रसारितानि क्रियन्ते[3] स्म। अतिथिभ्यो नीवारधान्यस्य तण्डुलस्य फलानाञ्चोपयोगोऽभवत्[4]।

उच्चवर्णातिरिक्तानां लौहकार-स्वर्णकार-कुलाल-निषाद-धीवराभीर-लुब्धक-शौण्डिक-शौनिक-आगुरिक-नटादिजातीनामपि वर्णनं कालिदासस्य काव्येषु प्राप्यते। आभीरः कालिदासेन घोषः कथितः।[5] एतज्जातिजनाः पशुपालन-व्यवस्थां कुर्वन्ति स्म। किराताः मृगयामकुर्वन्। युद्धकाले सेनायां प्रविष्टा अभवन्। स्वतन्त्र-रूपेणापि युद्धमकुर्वन्। कुमारसम्भवे "यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्न-शिखण्डिबर्हः" ( १।५ ) मृगान्वेषणे यत्र तत्र हिमालयपर्वतीयवनेषु भ्रमणशीलाः किराताः कथ्यन्ते। लुब्धकजातिजनाः विहगान् धृत्वा तेषां विक्रयं कुर्वन्ति स्म। व्याधाः लुब्धकाश्चैकस्यैववर्गस्यासन्[6]। लुब्धकसदृश एव शौण्डिको मदिरा-विक्रयस्य, शौनिकोमांस-विक्रयस्य तथा धीवरः ( अभि० अङ्क ६ ) मत्स्य-विक्रय-स्य कार्यं कुर्वन्ति स्म। आगुरिकस्य ( रघु० ६।५३ ) कार्यं मृगयालुकुक्कुराणां साहाय्येन मृगयान्वेषणमासीत्। राज्ञो दशरथस्य मृगयासहायतार्थमागुरिकाः वने गता आसन्। राज्ञो महाराजस्य च गृहमागुरिकाआश्रयं लभन्ते स्म। एते स्वयमपि मृगयां कुर्वन्ति स्म। शासक-वर्गमेते मृगयार्थगमनकाले साहाय्यमयच्छन्। नटजातेः व्यवसायो रङ्गमञ्चेऽभिनयप्रदर्शनमासीत्। नटेषु पुरुषस्य नार्यश्चोभयोरप्यस्ति-त्वमासीत्। नारी नटी कथ्यते स्म। नृत्यसङ्गीत-शिक्षाकार्यमपि नटजातिजनाः अकुर्वन्। मालविकाग्निमित्रे नाट्याचार्यगणदासहरदत्तयोः कलहनिर्देशोऽस्ति।

---

१. नीवारपाकादिकडं गरीयैरामृश्यते जानपदैर्न कच्चित्। रघुवंशम् ४।९

२. कुल्याम्भोभिः—अभि० १।१५

३. रघु० १।५२,

४. रघु० ५।९

५. रघुवंशम् १।४५

६. तदो महंत एव्व पच्चूसे दासिए पुत्तेहिं सउणिलुद्धएहिं वणग्गहणकोलाहलेण पडिबोधिदोम्हि।—अभि० अङ्क २—आरम्भस्य गद्यखण्डम्

७. व्याधगीतम्—मालवि० ३ अङ्कः

इमौ द्वावप्याचार्यौ स्व-शिष्यां छलिकाभिनयप्रदर्शनमादिशतः[1]। एवम्प्रकारेण साधारणजनतायाः व्यवसाय-कार्याणाञ्च वर्णनं प्राप्यते। प्रसङ्गवशेन कविना प्रतिहारिणेः[2] द्वारपालस्य[3] प्रसाधकस्य[4], लेखकस्य[5], वैतालिकस्य[6], दौवारिकस्यैवं-कर्मकरादिकस्य चित्रणं कृतं विद्यते। उल्लिखिताः सर्वे वेतनभोगिन आसन् तथा धनिकपरिवारेषु श्रमिककार्यं कुर्वन्ति स्म। कलिदासस्य काव्येषु वर्णितस्य स्वामिनः सेवकस्य च सम्बन्धोऽत्यन्तमधुरोऽस्ति। कर्त्तव्यपालनाय सेवकाः प्राणानपि त्यक्तुं दृढपरिकरा अतिष्ठन्। स्वामिनोऽपि भृत्यवर्गेषु स्नेह-दया-व्यवहारं कुर्वन्ति स्म।

महाकविकालिदासेन जनसामान्यस्य विश्वासस्य, श्रद्धायाः, व्रतस्योत्सवस्यैव-मनुष्ठानस्य निर्देशं कृत्वा लोकसंस्कृतेरुद्घाटनं कृतम्। पूजायाः श्राद्धादेश्च जनसामान्ये प्रचार आसीत्। कुशदूर्वाक्षतपुष्पादिद्रव्यैः पूजाकर्म सम्पन्नं क्रियमाण-मासीत्। घृतमधुनिर्मितार्घ्यं देवताभ्योऽतिथिभ्यश्च समर्पितं जायते स्म। जनतासु व्रतोपवासतीर्थयात्रानुष्ठानानि प्रचलितान्यासन्। प्रतिज्ञापूर्त्तौ, धार्मिकपर्वदिवसेष्वपि च व्रतरक्षाभवत्। सङ्गमस्थल-स्नान-फलं निर्दिशन् कविः लिखितवान्

> समुद्रपत्न्योर्जलसन्निपाते पूतात्मनामत्र किलाभिषेकात्।
> तत्त्वावबोधेन विनापि भूयस्तनुत्यजां नास्ति शरीरबन्धः॥
>
> —रघु० १३।५८

गङ्गायमुनयोस्सङ्गमे ये स्नात्वा पवित्राः भवन्ति, तेऽतत्त्वज्ञानिनोऽपि संसार-बन्धनान्मुच्यन्ते।

कविना तीर्थस्थानेषु शचीतीर्थस्य, सोमतीर्थस्य, गोकर्णतीर्थस्याप्सरस्तीर्थस्य (अभि० ५।३०) च निर्देशः कृतः। एषु स्थानेषु स्नातानामभ्युत्थानं भवति। जीवनस्य विघ्नबाधाः दूरीक्रियन्ते।

---

१. मालविकाग्निमित्रम्, प्रथमाङ्कः।
२. रघुवंशम् ६।२०
३. कुमारसम्भवम् ६।४८
४. रघुवंशम् १७।२२ तथा कुमार० ७।२०
५. लेखकैर्वाच्यमानम्—मालवि० अंङ्कः ५
६. रघुवंशम् ५।६५
७. अभिज्ञान० अङ्कः २
८. दूर्वाङ्कुर······विक्र० ३।१२
९. साक्षतपात्रहस्ता—रघु० २।२१

शकुनस्य भविष्यवाणीनां यन्त्रमन्त्रयोरङ्गविज्ञानस्य सम्वन्धिनां जनविश्वासानां चित्रणं कविना कृतम् । नारीकृते दक्षिणनयनस्फुरणमशुभम् यथा—'अम्मेह् किं मे वामेदरंणअणं विप्फुरदि' (अधि० शा १ ५।११ पश्चाद्वर्त्ति गद्यखण्डम्)। तस्याः कृते वामनेत्रस्फुरणं शुभम्—'अवि अ दक्खिणेदरं वि मे णअणं वएसो फुरदि' (मालवि० ५।६ पश्चाद्वर्त्तिगद्यखण्डम्' पुरुषाणां कृते दक्षिणवाहु-स्फुरणं शुभं कथितम्[1] ।

शृगालानां शब्दैरपशकुनं[2] तथा गृद्ध्राणां मण्डलोड्डयनै[3] र्विपत्तिः सूच्येते । ओषधीनां चमत्कारस्य वर्णनमायातम् । भरतकरेऽपराजितौषधिर्वद्धासीत् । यदनुसारं पित्रोरतिरिक्तः कोऽप्यन्यो जनस्तां गुटिकां नोत्थापयितुं समर्थोऽभवत् । तथाकृते गुटिका सर्पस्वरूपा भूत्वोत्थापकं दशति स्म[4] । हस्तरेखाभिर्भविष्यघटनाः ज्ञायन्ते स्म । अनुष्ठानेन तीर्थयात्रया दैवदुर्विपाकस्य शान्तिरभवत्[5]। कण्वश्शकुन्तलायाः 'अशुभ' भाग्यस्य शान्त्यै सोमतीर्थं गच्छति । एवम्प्रकारेण महाकविना जनसाधारणस्य विश्वासमूलकानां विधि-विधानानां वर्णनं कृतम् ।

कविः कन्यायाः पतिगृहगमनं सर्वेभ्यः कष्टकारकं ब्रवीति । महाकविश्शकुन्तलायाः पतिगृहगमनस्य हृदयविदारकवर्णनं तथा कुलपतिकण्वोपदेशकथनं[6] जनसाधारणदृष्टचा कृतवान् । अतः कालिदासरचनासु जनजीवनस्य सुन्दरं चित्रणमस्ति ।

## कालिदासवर्णितानि पुष्पाणि

महाकविकालिदासः पुष्पकविरस्ति । अनेनर्तुसंहारे षड्ऋतुषु जायमानानां पुष्पाणां साधुचित्रणं कृतम् । पुष्पाणि मानवजीवने सौन्दर्यम्, आह्लादम्, सुखञ्च जनयन्ति । एतेन व्यक्तेस्सुरुचेस्सांस्कृतिकचेतनायाश्चाववोधो भवति । संवेगात्मि-

१. अभि० १।१६

२. रघु० १६।१२

३. रघु० ११।२६

४. अम्हहे रक्खाकरंडअं से मणिवंधे ण दीसदि ।
—अभि० ७।२० परवर्त्तिगद्यखण्डम् ।

५. अभि० ४।६

६. शुश्रूषस्व गुरुन् कुरु प्रियसखीवृत्तिं सपत्नीजने,
पत्युर्विप्रकृताऽपि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी,
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥
—अभि० ४।१८

कानां शोभात्मिकानाञ्च प्रवृत्तीनां विश्लेषण-विवेचनानुशीलनानि पुष्पाणां प्रयोगेणैव सम्भाव्यन्ते। पुष्पेभ्यः केवलं प्रकृतेच्छाया एव तुष्टिर्न भवति, प्रत्युतोच्चभावस्यादर्शस्य, नीतेः,:धर्मस्यैवं सौन्दर्य-चेतनाया अप्युद्घाटनं भवति। यस्य कवेः पुष्पवाटिका यावती समृद्धा भवति, तस्य भावाभिव्यञ्जना तावती सबला प्रभावोत्पादिका च भवति ! महाकविना पुष्पैः नायिकानां वेणीसंहारस्य, शय्याप्रसाधनस्य, भवनालङ्करणस्यैवं कर्णकण्ठकराभूषणानामेवनिर्देशो न कृतः। प्रत्युत प्रेम्णः, शीलस्य, हर्षस्य, भक्तेः, संवेगात्मक-विभिन्नभावानामपि निरूपणं कृतम्। वस्तुतः पुष्पाणि विविधभावान् विचित्रसौन्दर्य-बोधेन सहोपस्थापयन्ति।

कालिदासेन कोकिलभ्रमरैश्चकृतस्याम्रमञ्जरि–रसास्वादनस्य नारीभिः कृतानां कमल–कर्णिकार-कल्हारप्रभृति–कर्णाद्याभूषणानां[1] तथा कुरवकादि केशसज्जायाश्च[2] वर्णनं कृतम्। नार्यो रक्तकमलानि हस्ते गृहीत्वा जलक्रीडां कुर्वन्ति स्म। कमलं सर्वाधिकं प्रियमासीत्। एतस्य विभिन्ना उपयोगा आसन्। कविः सौन्दर्यप्रसाधनाति-रिक्ताप्रस्तुतानां रूपेण कमलस्य विभिन्नपर्यायानां प्रयोगं कृत्वाभिव्यञ्जनायां विचित्रं चमत्कारमुत्पादितवान्। कमलपर्यायेषु पुण्डरीकस्य, अब्जस्य, अम्बुजस्य, अम्भोजस्य, अरविन्दस्य, पङ्कजस्य, सहस्रदलस्य, असितोत्पलस्य, इन्दीवरस्य, उत्पलस्य, नीलोत्पलस्य, काञ्चनपद्मस्य, रक्तकमलस्य, सितपद्मस्य, सितो-त्पलस्यैवं पद्मप्रभृतीनाञ्च निर्देशो विहितोऽस्ति। एतत्सत्यमस्ति यदुक्तकमलं विविध-सन्दर्भेष्वप्रस्तुतरूपेण व्यवहृतं विभिन्नभावानाम्, संवेगानाम्, संवेदनानाञ्चा-भिव्यक्ति करोति। पुण्डरीकारविन्दे कमलस्य नामान्तरे स्तः। परन्तु यत्र पुण्डरी-काण्यप्रस्तुतानां स्वच्छानां श्वेतानां विशालनेत्राणामभिव्यञ्जकानि सन्ति, तत्रार-विन्दानि कोमलतायाः, मसृणतायाः, सरसतायाश्चाभिव्यञ्जकानि भवन्ति। कदाचिद् विष्णुनयनयोः सौन्दर्याभिव्यञ्जनायै द्वयोरप्यप्रस्तुतयोः प्रयोगः क्रियते। परन्तु पुण्डरीकेण नेत्रस्य विशालतायास्स्वच्छतायाश्चाभिव्यक्तिर्भवति तथारविन्देन सरसता व्यज्यते। अतएव स्पष्टमस्ति यत् प्रकृति-परीक्षको महाकविकालिदासः कमलस्य समस्तपर्यायाणां विभिन्नाभिव्यञ्जनाकृते प्रयोगं कृतवान्। तस्यै तेषामभि-व्यञ्जनानां तत्तत्प्रसङ्गेषु दर्शनं सम्पत्स्यते। वयमत्राकाराद्यनुक्रमेण कविकालिदास व्यवहृतानां सर्वप्रथमं कमलपर्यायाणां तालिकां प्रस्तुमस्तदनन्तरमन्यपुष्पाणाम्। ज्ञायते, कविना प्रत्येकसन्दर्भे नवीन-नवीन-भावानामभिव्यञ्जनं कृतम्। समानार्थक-शब्दप्रयोगेऽपि भावाभिव्यञ्जनायास्सर्वथा मौलिकरूपं विद्यते।

---

१. कर्णेषु योग्यं नवकर्णिकारकम्'''''''ऋतु० ६।६ तथा कृतन्न कर्णापितवन्धनं सखेअभिज्ञान० ६।१८।

२. केशान्नितान्त'''''''ऋतु० ३।१९ तथा शिरसिवकुलमालाम्''''ऋतु० २।२५।

## कमलवाचिनश्शब्दाः

अब्जम्—६।३३ ( ऋतु० )

अम्बुजम्—३।३०, ४।४, ४।५, ६।१५ ( ऋतु० ) ११।२५ ( कुमार० )

अम्बुजम् ( हैम )—१३।६० ( रघु० )

अम्बुरुहम्—१३।६ ( रघु० )

अम्बुरुहम् ( हैम )—६।८, ६।२२, ( ऋतु० ) २।४४ ( कुमार० )

अम्भोजम्—१०।६९ ( रघु० )

अरविन्दम्—४।१४ ( ऋतु० ), १।४३, ५।१३, ६।६६ ( रघु० ) १।३३, ३।५६ ( कुमार० ) ३।५ ( अभिज्ञान० )

इन्दीवरम्—६।६५ ( रघु० )

उत्पलम्—२।९, २।११, २।१४, २।१५, ३।१४, ५।१० ( ऋतु० ) ६।४२, ७।२६, १२।८६ ( रघु० ) ।१४६, ४।८ ( कुमार० ) २८ ( पूर्व० )

उत्पलम् ( नीलम् )—२।२, ३।१७, ३।१८, ३।१९, ३।२६, ३।२८, ४।९ ( ऋतु० ) १।४६ ( कुमार० ) १।१८ ( अभिज्ञान० )

कमलम्—१।२८, ३।११, ३।२३, ३।२८ ( ऋतु० ) ८।३९, ११।१२ ( रघु० ) २।२९, २।३३, ७।८९, ८।१९, १३।२७ ( कुमार० ) ३३, ४४, ५२ ( पूर्व० ) २, १६, ५६ ( उत्तर० ) ५।१, ६।२० ( अभिज्ञान ) २।१२ एतदनन्तरं गद्यम् चित्र० उक्तिः, ४।५४ ( विक्रमो० ) ५।६ ( मालविका० )

कमलम् ( श्वेतम् ) २।१६, ३।११, ६।२८ ( ऋतु० ) १३।५४ ( रघु० )
सितपङ्कजमित्यप्यायातम्

कमलम् ( काञ्चनं कमलम् )—५।१३, १०।३२ ( ऋतु० ) ७।१२ ( अभिज्ञान० )

कमलिनी ( नीलवर्णा )—४।११ ( अभिज्ञान० )

कुमुदम्—३।२, ३।१५, ३।२१, ३।२२, ३।२५, ३।२७ ( ऋतु० ) ६।३६, ६।८६, १७।६, १९।३४ ( रघु० ) ८।७० ( कुमार० ) ४४, ६२ ( पूर्व० ) २, ( उत्तर० ) ५।२८।२८ ( अभिज्ञान० )

कुमुदिनी—३।१५ एतदनन्तरं गद्यम्, शकुन्तलोक्तिः ४।३ ( अभिज्ञान० )

कुवलयम्—२।२३ ( ऋतु० ) ११।९३ ( रघु० ) ३७, ४८ ( पूर्व० )

कुशेशयः—६।१८ ( रघु० ) ४।११ ( अभिज्ञान० )

जलजम्—१०।६० ( रघु० )

तामरसम् ( कमलम् )—९।१२ ( रघु० )

नलिनम्—१८।५ ( रघु० )

नलिनी—५।१४ ( ऋतु० ) ६।४४, ८।४५ ( रघु० ) ४।६ ( कुमार० ) ३ (उत्तर०) ३।१३ एतदनन्तरं गद्यम् प्रियं० उक्ति; ३।१९, ३।२०, ३।२४, ५।२१ एतदनन्तरं गद्यम् शकुन्त० उक्तिः (अभिज्ञान०) १।६, २।२२, ४।३९ (विक्रमो०)

पद्मम्—३।१, ३।१५, ४।१, ४।१५, ६।२, ६।२६ (ऋतु०) ६।२६, ६।३६, ६।८६, १०।८, १०।६२, १६।१६, (रघु०) ५।१९, ५।२७, ७।३८, ७।८६, ८।३०, ८।८६, ११।४७ (कुमार०) ३ (उत्तर०) ३।१९, (अभिज्ञान०) ४।४० (विक्रमो०)

पद्मम् (ताम्रम्) ३।१९ (अभिज्ञान०)

पद्मिनी—१६।६८ (कुमार०) २।१२ (मालविका०)

पङ्कजम्—३।१०, ३।२५, ५।५(ऋतु०) ४।१४, ७।६४, ८।५५, १९।८ (रघु०) ३।३७ (कुमार०) २।१० (मालविका०)

पुण्डरीकम् १०।९ (रघु०) ४।४२ (विक्रमो०) ४।७ (मालविका०)

मृणालम्—३।७ (अभिज्ञान०)

मृणालिनी—१७।६ (रघु०) ५।२९ (कुमार०)

राजीवम्—३।४ (ऋतु०) ३।५६ (कुमार०)

वारिरुहम्—८।३३ (कुमार० )

विसप्रसूनम्—४।२९, ८।३५ (कुमार०) ३।१६, ३।२४ (अभिज्ञान०) ४ ३१ (विक्रमो०) ११ (पूर्व०)

विसिनी—५।६ गद्यानन्तरम् मालविकोक्तिः (मालविका)

सरसिजम्—५।६९ (रघु०) ११९ (अभिज्ञान०)

सरोजम्—५।२७, ८।३३, ९।१७, १३।३२ (कुमार०)

सहस्रपत्रम्—७।११ (रघु०)

## अन्यपुष्पाणि

अर्जुनः—२।१७, ३।१३ (ऋतु०)

अशोकः—६।६ (ऋतु०) ८।६३, ९।२८ (रघु०) तृ० अं० का प्रारम्भिकं गद्यम् मधु० उक्तिः ५।५ (मालविका०)

अशोकः(रक्तः) ६।३६ (ऋतु०) २।७, ४।६२, ४।६३ (विक्रमो०)

आम्रमञ्जरी—६।१, ६।४, ६।१७, ६।२४, ६।२८, ६।२९, ६।३०, ६।३६ ६।३८ (ऋतु०), ४।१ (रघु०)

ककुभः—२।२१ (ऋतु०)

कदम्बः—२।१७, २।२१, २।२४, २।२५, ३।८, ३।१३, ४।९ (ऋतु०) २७ (पूर्व०)

कदम्बः (रक्तः) ४।६१ (विक्रमो०)

कर्णिकारः—६।६, ६।२२, (ऋतु०) ३।५३, ३।६३ (कुमार०) २।२२, ३।३ (विक्रमो०)

कल्हारम्—३।१५ ( ऋतु० ) ( कोकोवेल )

कल्पद्रुमपुष्पम्—१७।५३ ( कुमार० )

काशपुष्पम्—३।१, ३।२, ३।२८ ( ऋतु० ) ७।११ ( कुमार० )

किंशुकम्—६।२१, ६।२२, ६।३८ ( ऋतु० ) ९।३१ ( रघु० )

कुटजः—३।१३ ( ऋतु० ) ४ ( पूर्व० )

कुन्दः—४।२, ६।२५, ६।३१, ६।३६ ( ऋतु० ) १ १७।२७ ( कुमार० ) २ ( उत्तर० ) ३।८ ( मालविका० )

कुरवकः—( रक्तः ) ३।२ अनन्तरगद्यशकलम् ( विदूषकोक्तिः ) ३।५ ( मालविका० )

कुसुम्भः—१।२४, ६।५ ( ऋतु० )

केतकी—२।१७, २।२४, २।२७ ( ऋतु० ) ५।५८ ( कुमार० ) २४ ( पूर्व० )

केशरः—२।२१ ( ऋतु० ) ९।४० ( रघु० ) ३।५५ ( कुमार० )

कोविदारः—३।६ ( ऋतु० )

कङ्केल्लिः—३।१८ ( ऋतु० )

चम्पा—६।३ ( ऋतु० )

तिलकम्—३।३० ( कुमार० ) ३।५ ( मालविका० )

नमेरुपुष्पम्—१।५५ ( कुमार० )

नीपः—३।१३ ( ऋतु० ) २२ ( पूर्व० ) २ ( उत्तर० )

पलाशः—३।२९ ( कुमार० )

पाटलम्—१।१८ ( ऋतु० ) १६।५२ ( रघु० ) १।३ ( अभिज्ञान० ) २।७ ( विक्रमो० )

पारिजातः—६।६ ( रघु० ) १।४१, ८।९७, ९।२१, ९।३८ ( कुमार० ) २।१२ (विक्रमो० )

प्रियङ्गुः—४।११, ६।१४ ( ऋतु० )
प्रियालपुष्पम्—३।३१ ( कुमार० )
पुन्नागः—४।५७ ( रघु० )
बकुलः—२।२५ ( ऋतु० ) ९।३६ ( रघु० )
बन्धुजीवः—६।२६ ( ऋतु० ) ११।२५ ( रघु० ) ८।४० ( कुमार० )
बधूकपुष्पम्—३।५, ५।२७ ( ऋतु० )
मधूकम्— ३।१४ ( कुमार० )
मल्लिका—६।६ ( ऋतु० ) ,१६।५० ( रघु० ) १।२० एतदनन्तरं गद्यम् अनुसूयोक्तिः, २।२८, ४।१ एतद्गद्य खण्डम् प्रियंवदोक्तिः, ५।१२ ( अभिज्ञान० )
मन्दारः—६।२३ ( रघु० ) ६।५ ( कुमार० ) १।७, ४।६५ ( विक्रमो० )
मालती—२।२५, ३।२, ३।१८, ३।१९ ( ऋतु० ) ४० ( उत्तर० )
मालिनी—३।५ ( अभिज्ञान० )
मौलश्रीः—२।२५ ( ऋतु० )
यूथिकाः—( जूही ) २।२५ ( ऋतु० ) २८ ( पूर्व० )
लवङ्गपुष्पम् ८।२५ ( कुमार० )
लोध्रपुष्पम्—४।१, ६।३३ ( ऋतु० ) २।२९, ३।२ ( रघु० ) २ (उत्तर०)
शिरीष-पुष्पम्—१६।४८, १६।६१, १८।४५ ( रघु० ), १।४१, ५।४ ( कुमार० ), २, ( उत्त० मेघ), १।४, १२८, ६।१८ ( अभि० )
शेफालिका—३।१४ ( ऋतु० )
सप्तच्छदः—३।२, ३।१३ ( ऋतु०) ४।२३ ( रघु० )
सर्जः—२।१७, ३।१३, ( ऋतु० )
सिन्धुवारः—३।५३ ( कुमार० )

## महाकविकालिदासवाङ्मये वर्णितो मगधदेशः

महाकवि कालिदासेन स्वग्रन्थेषु विभिन्नदेशानां नगराणाञ्च वर्णनं कृतम्। इन्दुमती-स्वयंवर-रघुदिग्विजयावेतादृशौ सन्दर्भौ स्तः, ययोरनेकजनपदानां स्थानानाञ्च निर्देश आयातोऽस्ति। गुप्तकाले मगधदेशस्समुन्नत आसीत्। अतस्तस्य वर्णनं कस्यापि समकालीनस्य कवेः कृते स्वाभाविकं विद्यते। अस्मिन् काले चीनी यात्री फाहियानो भारतयात्रां कृतवान्, तथा स कान्यकुब्जं श्रावस्तीं तथान्यजनपदं तथैतेषु जनपदेषु स्थितानि नगराणि समुत्तीर्य पाटलिपुत्रं प्राप्तवान्।

पाटलिपुत्रं तदानीं मगधस्य राजधानिकासीत् । अस्य नगरस्यैश्वर्यमिदानीमप्यवशिष्ट मासीत् । फाहियानोऽत्रत्यां रथयात्रां दृष्टवान् । अस्यां विंशतिरथाः सहैवासन् । इयं रथयात्रा प्रतिवर्षं द्वितीयमासस्याष्टम्यां तिथौ सम्पन्ना जायते स्म । इदानीं पाटलिपुत्रं न केवलं मगधजनपदस्यैवापितु समस्त मध्यदेशस्य महानगरमासीत् । अस्मिन् समये कियतीभ्यः शताब्दीभ्यः प्रायेण समस्तमुत्तरभारतमेक-साम्राज्यान्तर्गतमभवत् । तस्य शासनं मगधाधीनमेवासीत् । एतत्पश्चिमदिशि लघुलघूनि नगराण्यासन् । मगधस्य नगराण्यपेक्षाकृतमहान्त्यासन्[1] ।

रघुवंश-महाकाव्ये वर्णिते द्वे नायिके मगधदेशीये स्तः दिलीपपत्नी सुदक्षिणा दशरथपत्नी सुमित्रा च । दिलीपस्सूर्यवंशीयप्रथमराजवैवस्वतमनुकुलेऽजनि, यस्य समर्थनं पुराणैरपि जायते। परन्तु तत् पत्न्याः कुल-वंशविषये तद्वास्तविकनामसम्बन्धे च सामग्री न प्राप्तास्ति । महाकविकालिदासेन दिलीपपत्नी मगधवंशस्य राजकन्या लिखिता—

तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा ।
पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा ॥

रघु० १।३१

यदा राजादिलीपो गुरुवशिष्ठ-दर्शनार्थन्तदाश्रमे समागतः, तदा तेन सह मगध-राजकुमारी सुदक्षिणाप्यासीत् । तथापि गुरुचरणौ स्पृष्टौ । सन्दर्भेऽस्मिन् कविना 'मगध' नामोल्लेखो विशेषाभिप्रायेण कृतोऽस्ति । प्रतीयते यत्कविः 'मगध'-नामनिर्देशं कृत्वा जनपदगौरवं सूचयितुं समीहते ।

तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी ।

रघु० १।५७

महाकविकालिदासो रघुवंशमहाकाव्यस्य तृतीयसर्गे सुदक्षिणायाः कथनं "मागधी" शब्देन तथा राज्ञो दिलीपस्य कथनं "मागधी-पति" शब्देन कृतवान् । एतेन प्रसङ्गेनापि मगधस्य गौरव-समृद्धिरेवाभिव्यज्यते ।

कस्यापि राज्ञो 'मागधीपति' रिति विरुदस्तदैव सम्भवो यदा तस्य पत्न्याः मागध्याः पितृगृहं विख्यातं भवेत् तथा तेन राजगौरवं सूचितं स्यात् । विरुदः केनापि प्रशंसासूचकपदकारणेनैव प्राप्यते । अतो महाराजदिलीपस्योल्लिखितविरुदो मगधदेशस्य सुख-शान्त्योः, प्रभुसत्ताया एवं राजवैभवस्य व्यञ्जनां करोति । यथा—

१. चन्द्रगुप्तविक्रमादित्यः—लेखको गङ्गाप्रसाद मेहताः, प्रकाशकः—हिन्दुस्तान एकेडमी० यू० पी० इलाहाबाद, सन् १९३९ ई०, पृ० ७५

न मे ह्रिया शंसति किञ्चिदीप्सितं स्पृहावती वस्तुषु केषु मागधी ॥

—रघु० ३।५

× × ×

सुखश्रवाः मङ्गलतूर्यनिस्वनाः प्रमोदनृत्यैः सह वारयोषिताम् ।
न केवलं सद्मनि मागधीपतेः पथि व्यजृम्भन्त दिवौकसामपि ॥

—रघु० ३।१९

× × ×

तथा नृपः सा च सुतेन मागधी..........

—रघु० ३।२३

महाकविना रघुवंशस्य नवमसर्गे सूर्यवंशी महाराजो दशरथ उत्तरकोशलस्य नृपोऽभिहितः । अस्य जनपदस्य राजधानिकायोध्यासीत् । दशरथस्य तिसृषु पत्नीषु कौशल्या दक्षिणकोशलस्य कैकेयी केकयदेशस्य च राजकुमार्यावास्ताम् । एतच्चानयो द्वयोर्नाम्न्यामेवसिद्धम् । परन्तु सुमित्रा कस्ये देशस्य राजकुमार्यासीदिति तन्नाम्ना न ज्ञातुं शक्यते 'महाकविना सा मगधस्य राजकन्योल्लिखिता'—

तमलभन्त पतिं पतिदेवताः शिखरिणामिव सागरमापगाः ।
मगधकोशलकेकयशासिनां दुहितरोऽहितरोपितमार्गणम् ॥

—रघु० ९।१७

आदिकविना सुमित्रायाः जन्मस्थानस्य राजवंशस्य च न क्वाप्युल्लेखः कृतः । कालिदासेन कथं सा मगध-राजकुमार्यभिहितेति न निश्चेतुं शक्यते । परन्त्वेतावत्सत्यं यत्तदानीं मगधस्य प्रभावः ऐश्वर्यमारूढ आसीत् । अतएव सुमित्रा कविना मगधराजकन्या लिखिता आदिकविदृष्टावज्ञातराजवंशोत्पन्नायाः सुमित्रायास्सम्बन्धः कालिदासेन मगधराजवंशेन सह योजितोऽस्ति । एतेन मगधस्य समृद्धेः, राजसत्तायाः, प्रभुतायाश्चाभिव्यञ्जना भवति ।

मालविकाग्निमित्रनाटकस्य प्रथमाङ्के राजामात्ययोः प्रवेशानन्तरं तयोस्सम्भाषणेन मगधराजक्रान्तिसम्बन्धे सूचना प्राप्यते मौर्यराजः पदच्युतः कृतः । तस्यामात्यं कारागृहे निधायाग्निमित्रस्य पिता पुष्यमित्रो राजसिंहासनं प्राप्तवान् । विदर्भकन्या मालविका केनापि प्रकारेण पूर्वविदेहे समागच्छति तथा नाटकस्य समस्तघटना अत्रैव घटिताः भवन्ति ।

कालिदासेनेन्दुमती-स्वयंवरावसरे सर्वप्रथमो मगधेश्वरः परन्तपः समुपस्थापितस्तथेन्दुमत्या तस्य प्रणतिं कल्पयित्वा मगधदेशं प्रति सम्मानं प्रदर्शितम् । मगधस्यायं नृपतिश्शरणागतवत्सलः प्रजानुरञ्जकश्चास्ति । कविना सोऽपि प्रशंसितः—

ततो नृपाणां श्रुतवृत्तवंशा पुंवत्प्रगल्भा प्रतिहाररक्षी।
प्राक्सन्निकर्षं **मगधेश्वरस्य** नीत्वा कुमारीमवदत्सुनन्दा॥

—रघु० ६।२०

असौ शरण्यः शरणोन्मुखानामगाधसत्त्वो **मगध**-प्रतिष्ठः।
राजा प्रजारञ्जनलब्धवर्णः परन्तपो नाम यथार्थनामा॥

—६।२१

कामं नृपास्सन्तु सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम्।
नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः॥

—६।२२

क्रियाप्रबन्धादयमध्वराणामजस्रमाहूतसहस्रनेत्रः।
शच्याश्चिरं पाण्डुकपोललम्बान्मन्दारशून्यानलकाँश्चकार॥

—६।२३

अनेन चेदिच्छसि गृह्यमाणं पाणिं वरेण्येन कुरु प्रवेशे।
प्रासादवातायनसंश्रितानां नेत्रोत्सवं **पुष्पपुराङ्गनानाम्**॥

—६।२४

**ऋजुप्रणामक्रिययैव** तन्वी.........

—६।२५

सुनन्दा सर्वप्रथममिन्दुमतीं मगधनरेशसमीपं नीतवती। उक्तवती च अयमतिपराक्रम्यस्ति तथा स्वशरणागतं गोपायति। स्वप्रजाः सुखिनीः कृत्वानेन परं यशोऽर्जितम्। अस्य नाम परन्तपोऽस्ति। शत्रुसन्तापकारणादस्यैतन्नामापि यथार्थमस्ति। यथा तारकैः ग्रहैर्नक्षत्रैश्च युक्तापि रात्रिस्तदैव ज्योत्स्नापूर्णा कथ्यते, यदा चन्द्रोदयो भवति। तथैव संसारे सत्स्वपि सहस्रराजसु धरेमं विना सनाथा न भवितुं शक्नोति। अनेनानेकयज्ञाः कृताः। अस्य गृहे वारम्वारमिन्द्रो यज्ञभागं स्वीकर्त्तुं समागतवान्। अतएव इन्द्राणीशिरोवेणी कल्पवृक्षपुष्पैः शृङ्गाराभावे तस्याः पीतकपोलयोरालम्बिता। यदि त्वमिच्छसि तदास्यग्रीवायां वरमालां देहि। यतो यदा त्वमनेन सह परिणीता कुसुमपुरं यास्यसि तदा तत्रत्याः नार्यः वातायनस्थाः त्वां निरीक्षिष्यन्ति तथा तव सुन्दरतया प्रसन्नाः भविष्यन्ति। तेषामपारमक्षिसुखं सम्पत्स्यते।

मगधेश्वरस्योल्लिखित-वर्णने मगधस्य राजधानिकायाः कुसुमपुरस्यापि नामाङ्कनमायातम्। तत्रत्योन्नतप्रासादानां वातायनप्रभृतेश्चापि निर्देशो जातः। अतएव स्पष्टमेतद्यत् मगधस्य राजधानिका कुसुमपुरमर्थात् पाटलिपुत्रमासीत्। तत्र कविसमयपर्यन्तं मौर्य-सम्राट्-समृद्धिरवशिष्टासीत्।

रघुवंशमहाकाव्यस्य चतुर्थसर्गे रघुदिग्विजयस्य वर्णनमस्ति । राज्यस्यान्तरिक-रक्षायाः समुचितप्रबन्धकरणानन्तरं रघुर्दिग्विजयाय प्रस्थितवान् । तस्य विजय-वाहिन्या सर्वप्रथमं पूर्वदिशि प्रस्थितम् । शीघ्रमेव च तया पूर्वसागरतटः प्राप्तः । सन्दर्भेऽस्मिन् कविना क्वापि मगधे कस्यापि युद्धस्य तस्य पादाक्रान्ततायाश्च चर्चा न विहिता । अतएव स्वयंवर इन्दुमत्या सर्वप्रथमं मगधेश्वरस्य प्रणतौ, दिग्विजयावसरे रघोर्विजयवाहिन्या मगधस्यापदाक्रान्ततायाञ्च कविकालिदासस्य मगधं प्रति महान् सम्मानभावो व्यज्यते । मगधं प्रति कविकालिदासस्यास्मिन् पक्षपातस्तज्जन्मस्थान-कारणान्मगधेश्वराश्रयनिवासकारणाद्वा सकारणमेवास्ति ।

महाकविकालिदासश्शालिवपनं धान्यारोपणं तत्कर्त्तनञ्च वर्णितवान् । कवि-र्धान्येक्षु-समृद्धिचित्रणं करोति । मगध एतद्द्वयमपि पर्याप्तिमुत्पन्नं भवति । कविना मगधजनसंस्कृतेरतिसजीवचित्रणं कृतम् । 'लुब्धकाः', 'धीवराः', 'शौण्डिकाः', 'आगुरिका' अपि मगधे निवसन्ति । अतएव कवेः मगधेन सहात्यन्तात्मीय भावोऽस्ति । स इमं देशं सम्मानेन, पूज्यबुद्ध्या च पश्यति । सम्भाव्यते यदेष एव प्रदेशः कदाचित्कवेः जन्मभूमिरभविष्यत् ।

प्रसङ्गेऽस्मिन्नेतदपि विचारणीयं तत्त्वमस्ति यत् कविकुलगुरुकालिदासः रघु-वंशस्य सम्बन्धं मगधेन सह स्थापितवान् । सुदक्षिणा मागधी वर्त्तते । तयैव रघुवंशस्य प्रारम्भो जायते । अतो रघुवंशसदृशे रघुवंशकाव्यप्रणयनेऽपि तदेव तथ्यं सन्निहित-मिति नात्र काचन विप्रतिपत्तिः ।

## आभारप्रदर्शनम्

मुद्रण-( प्रूफ ) संशोधनस्य कार्यं हिन्दूविश्वविद्यालयस्य प्राध्यापकेन यशस्वि-विदुषा पण्डितश्रीदरबारीलाल कोठिया ( एम० ए०, आचार्यद्वयेन ) महोदयेन कृतम् । अतोऽहं हृदयेन तस्याभारं स्वीकरोमि । महावीर ( प्रेस ) मुद्रणालयस्य व्यवस्थापकं श्रीबाबूलालमहोदयं प्रत्यपि कृतज्ञताज्ञापनं करोमि, यस्य सुरुचिना 'मागधस्य' कलात्मकं मुद्रणं सम्पन्नम् । अन्ते गुरुद्वयस्य वाराणसेयपण्डितश्रीकैलाश-चन्द्रशास्त्रिणस्सिद्धान्ताचार्यस्य तथा जबलपुरीय डॉ० हीरालाल जैन एम० ए०, डी० लिट्० महोदयस्य पूज्यचरणेषु श्रद्धा-समर्पिता, ययोराशीर्वादेन ज्ञानचक्षु-रुन्मीलनं जातम् ।

॥ सरस्वती श्रुतिमहती न हीयताम् ॥

# अनुसन्धानकार्यसम्पादनार्थं प्रस्ताविताः कतिपयविषयाः

यद्यपि महाकविकालिदासस्य काव्य-नाटक-ग्रन्थानवलम्ब्यानेकानि पुस्तकानि निबद्धानि सन्ति, तथापीदन्निर्विवादमस्ति यत्कालिदासोपर्यन्वेषणकार्यमत्यल्पं सञ्जातम्। अनेनैव हेतुना अनुसन्धित्सुविदुषां कृतेऽधिप्रबन्ध-महाप्रबन्धनिर्माणार्थं कतिपयविषयनामानि प्रस्तूयन्ते मया।

१. महाकविकालिदासवाङ्मये "अप्रस्तुतयोजना" तस्याश्चमत्कारश्च।
२. कालिदासग्रन्थेष्वन्तर्भुक्तकथानां विश्लेषणं पौराणिकव्याख्यानं महत्त्वञ्च
३. कालिदास-प्रयुक्त-क्रियापदानामौचित्यविचारः।
४. कालिदासग्रन्थेषु प्रयुक्तपारिभाषिकशब्दानां व्याख्यानं सौन्दर्यनिरूपणञ्च।
५. कालिदासस्योपरि 'आदिकविवाल्मीकेः' प्रभावः।
६. कालिदासनाटकानां स्वरूपनिर्धारणं शास्त्रीयपरीक्षणञ्च।
७. कालिदासग्रन्थेषु वर्णिता भक्तिभावना दर्शनभावना च।
८. परवर्तिमहाकाव्योपरि कालिदास-प्रभावः।
९. कालिदासश्रृङ्गारसाधनायाः औचित्यं सौन्दर्यञ्च।
१०. कालिदाससाहित्ये निहिता व्यञ्जना।
११. कालिदास-ग्रन्थेषु प्रतिपादितवैदिकधर्मसिद्धान्तानां विश्लेषणं विवेचनञ्च।
१२. कालिदासस्य नाटकानामुपरि पौराणिकप्रभावः।
१३. कालिदासस्य नारीपात्राणां शीलनिरूपणम्, अन्यसंस्कृतकविभिः सह तस्य तुलनात्मकविवेचनञ्च।
१४. कालिदासकाव्येषु वर्णितं प्रेम सौन्दर्यतत्त्वञ्च।
१५. कालिदासग्रन्थेषु लोकतत्त्वम्।
१६. कालिदास-प्रयुक्तशब्दानां भाषावैज्ञानिकाध्ययनम्।
१७. कालिदास-काव्यप्रकाशे अजन्ताकलामण्डपचित्राणामध्ययनम्।
१८. कालिदासकाव्येषूदात्ततत्त्वम्।
१९. कालिदासप्रयुक्तोपमानानां विश्लेषणं सौन्दर्यविवेचनञ्च।
२०. कालिदासकाव्यानां काव्यमूल्यांकनम् तेषां शास्त्रीयपरीक्षणञ्च।

●

